माणिक्यरत्नादि विशेषकं च
धृत्वाऽऽननं शोभय चन्द्रकान्त ॥
पत्ये नमः हीरकचन्द्रतिलकं समर्पयामि ।
पत्ये नमः माणिक्यविशेषकं च समर्पयामि ।

नीलादिरत्नस्थासकम् ।
आर्यावृत्तम् ।

तिलकं मुखमण्डनदं वरेण्यपेरोजनीलसङ्कलितम् ।
तरुणीकटाक्षकाम्यं स्वीकुरु वदनारविन्दभृंगाभम् ॥
पत्ये नमः नीलपेरोजादिस्थासकं च समर्पयामि ।

चित्रपुण्ड्रः ।

चित्रपुण्ड्रं कपोलान्तं चित्रकं पत्रकं तथा ।
पराधर्वाट्यपुष्पाभ्यां कुरुष्व प्राणवल्लभ ॥
पत्येनमः चित्रपुण्ड्रं समर्पयामि। पत्रकं च समर्पयामि।
पत्येनमः पराधं समर्पयामि। वाट्यपुष्पं च समर्पयामि।

---

पत्रकम्—पत्तिस्तु पत्रकं लेखा बाहुगण्डस्तनादिषु ।
पत्रां गुलिः पत्ररेखा सा ललाटे ललाटिका ॥ वैजयन्ती ॥

१. चित्रपुण्ड्रम् - is a decoration on the forehead on either sides of Pundra or Tilaka made with fine saffronised sandal and which is called अर्चा in Gujarati, Hindi etc.

२. चित्रकम् - A sectarial mark on the forehead.

३. पत्रकम् - Perfumed delineations on the arms, cheek, breast etc.

जवादिः ।

**मोहनाह्लादकरणं जवादिं गन्धराजकम् ।**
**भ्रुवोर्विभूषणार्थाय लेपयामि सुमोहन ॥**

**पत्ये नमः भ्रूभूषणार्थं जवादिं समर्पयामि ।**

अञ्जनम्

**हिमवच्छीतलं चन्द्रमुक्ताचूर्णादिनिर्मितम् ।**
**नेत्रसौख्यकरं कृष्णं स्थितमञ्जनभाजने ॥**

---

जवादिः—जवादि नीरसं स्निग्धं ईषत्पिंगं सुगन्धदम् ।
आतपे बहुलामोदं राज्ञां योग्यं च तन्मतम् ॥ राजनिघण्टुः ॥

जवादिमार्जारी - A javadi Cat - ஜவ்வாது பூனை జవ్వాదిపిల్లి.

गन्धमार्जारः - A civet Cat - புனுகுபூனை పునుగుపిల్లి.

खट्टासः - Civet புனுகு పునుగు मुषक्.

१. पुरुषाञ्जनम् - Surma powder which is applied over the eyelids to darken and improve the eyelashes. It is an universal article of eastern Toilet which is chiefly used by men ornamentatively and medicinally and at the same time for cooling the eyes.

२. अञ्जनं or कज्जलं - Coliyrium. An application used for the eyes both by males and females.

It is made of 6 kinds Viz.

अञ्जननामानि—सौवीरं जाम्बलं तुत्थं मयूर श्रीकरं तथा ।
दर्विका नीलमेघश्च अञ्जनानि भवन्ति षट् ॥

अञ्जनस्यगुणाः—निर्मलचन्द्रतुल्य निराकुल दृष्टिकारित्वम् ॥ राजवल्लभः ॥

त्रपोश्शलाकया नेत्ररञ्जनं पुरुषाञ्जनम् ।
अञ्जयामि शुभे नेत्रे दीर्घदर्शिन् सुलोचन ॥

पत्ये नमः नेत्रे अञ्जनेन अञ्जयामि ।

सिन्दूरम् ।

उदितारुणसंकाशं जपाकुसुमसन्निभम् ।
सीमन्तभूषणार्थाय सिन्दूरं प्रतिगृह्यताम् ॥

पत्ये नमः सीमन्तभूषणार्थं सिन्दूरं समर्पयामि ।

अक्षताः ।

अक्षतान् विविधान् रम्यान् सौवर्णान् कुंकुमाङ्कितान् ।
अक्षय्यफलदान् फाले गन्धस्योपरि धारय ॥

पत्ये नमः अलङ्करणार्थं अक्षतान् समर्पयामि ।

---

सिन्दूरनामानि— १. सीमन्तकम् । २. शृंगारकम् । ३. सन्ध्यारागम् ।
४. गणेशभूषणम् । ५. अरुणम् । ६. सौभाग्यम् ।
७. मांगल्यम् ।
सिन्दूरं रक्तरेणु च नागगर्भं च सीसजम् ॥ भावप्रकाशे ॥

सिन्दूरदानमन्त्रः—सिंदूरं च वरं रम्यं भाले शोभाविवर्द्धनम् ।
पूरणं भूषणानां च सिंदूरं प्रतिगृह्यताम् ॥ ब्रह्मवैवर्ते ॥

अक्षताः— न क्षतं - अक्षतं - न क्षताः येषां ते—अक्षताः
अक्षताः पान्तु इति स्वस्तिवाचने ॥

परिधानमण्डनम् ।

जङ्घात्राणमुरस्त्राणं तनुत्राणं निचोलकम् ।
ग्रैवं प्रावारकं चैव कण्ठवस्त्रं सुभूषणम् ॥

लघुकञ्चुकमुत्कृष्टं गळावेष्टनमौर्णकम् ।
चित्रोत्तरीयं स्वर्णाभं शिरस्त्राणं शुभोचितम् ॥

हस्तप्रावारकं क्षौममुखमार्जनशाटिका ।
कटित्रं च सुपादत्रं पादावरणबन्धिनी ॥

सुवर्णोपानहौ चापि पादयोस्सुखदायिके ।
इत्यादि परिधानाख्यं शीतातपनिवारणम् ॥

कान्तिप्रदं शरीरस्य मण्डनं स्वीकुरु प्रभो ॥

पत्ये नमः परिधानमण्डनं समर्पयामि ।

रत्नवस्त्रादिधारणम् (पञ्चचामरवृत्तम् )

A Rich Royal Wear.

मणीपुरं मणिप्रवेकवेष्टनं सगुच्छकं
मणीयुतं सुवारवाण शोणरत्नतूणकम् ।

मणीपुरम् - A waist coat set with precious stones.

मणिप्रवेकवेष्टनम् - A crown or any head dress set with gems.

उष्णीशधारणम्—उष्णीशं कान्तिकृत्केश्यं रजोवातकफापहम् ।
लघु तच्छस्यते यस्मात् गुरुपित्तादिरोगहृत् ॥

मणीन्द्रमुष्टिदण्डकं मणीचकोपनेत्रकं
हरिन्मणीमणीवकं गृहाण प्राणनायक ॥

(अस्त्र शस्त्रधारणम् - आयुध समर्पणम्)

सुरत्नचापबाणपाश लोहसुषीकुन्तकं
सुचक्रचन्द्रहासकं सुचर्मशौर्यभासकम् ।

---

सगुच्छकम् - With cluster of pearls etc. hanging on the side of the head dress

मणीयुतं वारवाणम् ; Gemset Armour.

शोणरत्नतूणकं - A quiver set with rubies.

मणीन्द्रमुष्टिदण्डकम् - An ornamental golden stick containing a handle set with superior diamonds.

दण्डधारणप्रयोजनम्—सर्वोत्साहबलस्थैर्यधैर्य वीर्यविवर्धनम्
अवष्टम्भकरं चापि भयघ्नं दण्डधारणम्
रक्षः सर्पादि भयजित्.........॥

मणीचकोपनेत्रकं - A pair of specks containing fine cooling चन्द्रकान्त pebbles sometimes the frame around which is set with tiny brilliants.

हरिन्मणीमणीवकं- A flower, a broach, or a star set with emeralds

अस्त्रशस्त्रधारणम्— खड्गं चापभुशुण्डिभल्लछुरिकां कुन्तं वरं तोमरं
बाणं चांकुशलोहनाडिपरिघं कट्टारकं मुद्गरम् ॥
दण्डंचर्म सुवर्णरत्नखचितं तूणीरकं सुंदरं
धृत्वाचार्पितमायुधं बहुविधं शत्रून् प्रभो भेदय ॥

आयुधनिर्वचनम्— नक्षीहेतिः शस्त्रमस्त्र मायुधशत्रुघ्नमायुधम् ॥ वैजयन्ती ॥

भुसुंडिभल्लमुद्गरं च तोमरं कटारकं
गृहाण नाथ रत्नवस्त्रमस्त्रशस्त्रभूषणम् ॥
पत्ये नमः रत्नवस्त्रादीनि समर्पयामि ।
पत्ये नमः । अस्त्रशस्त्रायुधान्यपि समर्पयामि ।

---

आयुध नामानि-- भुसुण्डी च गदा खड्गो दण्डः कोदण्ड तोमरम् ॥
कुन्तः पाशाङ्कुशोस्त्रञ्च बाणश्चैवायुधस्तथा ॥

रत्नचापम् - A Bow set with precious stones·

बाणः - An arrow·

लोहसुषी - A Gun· कुन्तकं - A Lancet·

चक्रं - A round wheel like weapon·

चर्म - A shield made from the skin of Black Antelope or from a Tortoise shell

भुसुण्डी - A wooden club with iron knobs.

भल्ल-An arrow with a head like snuhi leaf which is called भाला.

भिंदिपाल - A long arrow with a large head or नालिकास्त्र.

मुद्गरम् - A Mallet· तोमरम् - An iron club· कट्टारकं or कटारकं- a dagger.

धनुर्लक्षणम्--- प्रायो योज्यं धनुःशार्ङ्ग गजयोधाश्वसादिनाम् ।
रथिनां च पदातीनां वांशं चापं प्रकीर्तितम् ॥

खड्गलक्षणं-प्रयोजनञ्च---नीलोत्पलसवर्णाभंतीक्ष्णदंष्ट्रं कृशोदरम् ।
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ॥

मण्डलाकारतः खड्गभ्रामणं भ्रान्तमुच्यते ।
तदेव बाहुमुद्यम्य कृतमुद्भ्रान्तमीरितम् ॥
भ्रामणं स्वस्य परितः खड्गस्याविद्धमुच्यते ।
परप्रयुक्तशस्त्रस्य वारणार्थमिदं त्रयम् ॥

तोमरः— तोमरः काष्टकायःस्यात् लौहिशीर्षस्सुपुच्छवान्
हस्तमात्रोन्नतांगश्च रक्तवर्णस्त्ववक्रगः ॥ देवीभागवते ॥

तोमर प्रयोजनम्— दृष्टिघातं भुजाघातं पार्श्वाघातं द्विजोत्तम ।
ऋजुपक्षेषुणापातं तोमरस्य प्रकीर्तितम् ॥

अस्त्रभेदाः— खड्गचर्म धनुर्बाणौ शाल्वभल्वौ तथापरौ ।
अर्द्धचन्द्रश्च नाराचः शक्तियष्टि स्तथापरे ॥
परशुश्चक्र शूले च परिघश्चैवमादयः ।
अस्त्रभेदाः समुद्दिष्टाः श्रीमद्भोजमहीभुजा ॥

( युक्तिकल्पतरुः )

शल्वं - A Javelen. प्रासः - A spear.

परिघा - A Bludgeon. गुलिप्रक्षेपणी - A cannon आग्नेयास्त्रम्.

शङ्कुः - A dart. काण्डः - A shaft. शरः - An Arrow.

नाराचः - An iron arrow. परशुः - A battle axe.

शूलः - A pike ; a pointed weapen.

अर्धचन्द्र - A moon like weapon. A kind of crescent shaped miscible

छुरिका - A knife. कृपाणः - A dagger.

असि - A sword. असिपुत्रिका - A small sword.

आभरणपञ्चकम् ।

(चक्षुष्या मणयःशीता लेखनाविषसूदनाः ।
पवित्राधारणायाञ्च पाप्माऽलक्ष्मी मलापहा ॥)

नवरत्नाभरणानि-नवविधमौक्तिकाभरणानि
सप्तविधउपरत्नाभरणानि - नानाविध नवीन रत्नाभरणानि ।

शुभ्राणि वज्राणि सुमौक्तिकानि
माणिक्यगारुत्मतरञ्जितानि ।
माहेन्द्रनीलैरपि भूषितानि ।
गृहाण नानाभरणानि तानि ॥ १ ॥

सपुष्यरागाणि सविद्रुमाणि
गोमेदवैदूर्यविचित्रितानि
प्रसिद्धरत्नैर्नवभिः कृतानि
गृहाण नानाभरणानि तानि ॥ २ ॥

---

मणिर्लुठति पादेषु काचश्शिरसिधार्यते ।
यथैवास्ते तथैवास्तां काचःकाचो मणिर्मणिः ॥

नवरत्नानि—— मुक्ताफलं हीरकं च वैडूर्यं पद्मरागकम् ।
पुष्यरागं च गोमेदं नीलं गारुत्मतं तथा ।
प्रवाळयुक्तान्येतानि महारत्नानि वै नव ॥ विष्णुधर्मोत्तरे॥

गजेक्षुजीमूतवराहशङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजन्यैः ।
नानासुमुक्ताफलनिर्मितानि
गृहाण नानाभरणानि तानि ॥ ३ ॥

कर्केतनावर्तक चन्द्रकान्तैः
वैक्रान्तकैर्पेरज (पेरोज) सूर्यकान्तैः ।
सप्तोपरत्नैः पुलकैः कृतानि
गृहाण नानाभरणानि तानि ॥ ४ ॥

---

नवरत्नानि-— वज्रंच मौक्तिकश्चैव माणिक्यं नीलमेव च ।
तथा मरकतं ज्ञेयं महारत्नानि पञ्चधा ॥
गोमेद पुष्यरागश्च वैडूर्यं च प्रवाळकम् ।
चत्वारि उपरत्नानि नवरत्नमिदंस्मृतम् ॥ तन्त्रसारे ॥

नवग्रहस्य नवरत्नानि- माणिक्यमुक्ताफल विद्रुमाणि
ताक्ष्यं च पुष्पं भिदुरं च नीलम् ।
गोमेदकं चापि विदूरकं च
क्रमेण रत्नानि नवग्रहाणाम् ॥

पञ्चरत्नानि— नीलकं वज्रकंचेति पद्मरागश्च मौक्तिकम् ।
प्रवालंचेति विज्ञेयं पंचरत्नं मनीषिभिः ॥

पञ्चरत्नानि— कनकंहीरकं नीलं पद्मरागश्च मोक्तिकम् ।
पंचरत्न मिदंप्रोक्तं ऋषिभिः पूर्वदर्शिभिः ॥

पञ्चरत्नानि— सुवर्णरजतंमुक्ता राजावर्तं प्रवाळकम् ।
रत्नपञ्चक माख्यातं शेषं वस्तुब्रवीम्यहम् ॥आदिपुराणे॥

अन्यैर्विचित्रैर्विमलैस्सुवर्णैः
अष्टोत्तरैश्चापि शताधिकैश्च ।
विराटजैः स्फाटिकनिर्मितानि
गृहाण रत्नाभरणानि तानि ॥ ५ ॥

(ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्रणाशनं ।
पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥)

रत्नालङ्कारमञ्जरी ।

धन्यंमाङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनं ।
हर्षणं काम्यमौजस्यं रत्नालङ्कारधारणम् ॥

---

हीरक जातयः— हीरकःपुंसि वज्रोसौ चन्द्रो मणिवरश्च सः ।
स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियः स्मृतः ।
पीतो वैश्योऽसितश्शूद्रो चतुर्वर्णात्मकश्च सः॥
भावप्रकाशे ॥

नवविध मौक्तिकानि—करीक्षुजीमूतवराहशङ्खमत्स्याहि शुक्त्युद्भववेणुजन्यैः ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भव मेव भूरि ॥
शालिग्रामनिघण्टुः ॥

अष्टविधशुक्तिमौक्तिकानि—मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृ-
च्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा ॥

विशेष रत्ननामानि— वज्रेन्द्रनीलमरकतकर्केतनपद्मरागरुधिराख्याः ।
वैदूर्यपुलकविमलकराजमणिस्फटिकशशिकान्ताः ॥
सौगन्धिकगोमेदकशंखमहानीलपुष्परागाख्याः ।
ब्रह्ममणिज्योतीरसशस्यकमुक्ता प्रवाळानि ॥

## आभरण नवरत्नमालिका (पञ्चचामर वृत्तम्)

### अलंकरण नामानि ।

ललंतिकां लवंगिकां ललाटिकां च वालिकां
सुलंबिकां ललामिकां ललाटपट्टहासिकां ।
सुलंबिनीं च लम्बुषां लतामणेः प्रलंबिकां
गृहाण नीललोहितादिपादलंबिमालिकाम् ॥ १ ॥

सुकर्णिकां च कण्ठिकां च पञ्चरत्नमालिकां
सुवज्ररत्नमंगदं समौक्तिकस्य जालिकां ।
हस्तिमौक्तिकादिरत्न मकरकंठमालिकां
गृहाण रत्नमूर्मिकां च मुद्रिकां च पालिकाम् ॥ २ ॥

सुताक्ष्यरत्नमणी कर्णवेष्टनं च मौलिकां
सघण्टिका सुनादयुक्त हीरघटीयन्त्रिकां ।
सुवज्ररत्नपक्षिकञ्च साक्षरादिमुद्रिकां
गृहाण नाथ रत्नमत्स्यमन्दुकां तथैंगिकाम् ॥ ३ ॥

सुकुण्डलं च सूर्यचन्द्रमण्डलं च मेखलां
सलोलकं ललामकं कलापकं च शृङ्खलां ।
सुलंबनं प्रलंबिनीं च लंबहार मंडलं
गृहाण गोलरत्न मणीचोलकं सुकोमलम् ॥ ४ ॥

सुकंकणं सकिंकिणीकनूपुरं च हंसकं
किरीटकं सहीरकं सुशेखरं च तूरकं ।
सुपद्मकं च स्वस्तिकं च बालकं च तालकं
गृहाण नाथ नायकं त्रिकोणवज्रलोलकम् ॥ ५ ॥

सुवज्रहार नीलहार मौक्तिकादि हारकं
प्रवाळराग पद्मराग पुष्पराग हारकं ।
विदूररत्न तार्क्ष्यरत्न राहुरत्न हारकं
गृहाण नाथ माणवार्धमाणवादि हारकम् ॥ ६ ॥

नवार्धहार तारहार मूर्धतार बन्धुरं
सुचन्द्रकान्त चन्द्रहार चाटुकार चन्दिरं ।
सुहेमहार टङ्कहार मत्स्यमौक्तिमन्दरं
गृहाण नाथ हारफलं सुंदरांग सुन्दरम् ॥ ७ ॥

सुहीरमणी हरिन्मणी नीलमणी हारकं
सशुक्तिमणी शोणमणी लतामणी हारकं ।
सुमंजुमणी केतुमणी तमोमणी हारकं
गृहाण नेत्रमणी नाथ नागमणी हारकम् ॥ ८ ॥

पारिहार्यं पारितथ्य पारिजात पार्श्वकं
पाळियुगल पालपाश्य वालपाश्य पाषकं ।

पादकटक पादरत्नचूडकं पदांगदं
गृहाण नाथ पादुकां च पादकांगुलीयकम् ॥ ९ ॥

भूषणाष्टकम् ।

(भोग्यभूषोत्तमं भव्यं भूषणं वैभवं वरं ।
तुष्टि पुष्टि प्रीतिकरं सौभाग्यं सर्ववर्धनम् ॥)

आर्यागीतिः ।

†मणिमकुटं कटिलग्नं कुटिलं कटिसूत्र चिलकं तरळं ।
तिलकं सचन्द्रशकल सुचन्द्रकलां पादवलयकं सरळम् ॥

नासामणि पञ्चसरं नवसर माणिक्यनीलकं त्रिसरं ।
वर्णसरं सप्तसरं बिंबसमाकार भूषणं प्रसरम् ॥२॥

भुजंगप्रयातम् ।

शिरोरत्नभूषं च कर्णावतंसं
तुलाकोटि कोटीर वैकक्ष कक्ष्यं ।
नखद्योतमुत्क्षिप्तिकं क्षुद्रघण्टां
करे शक्तिमुद्रां च गृह्णीष्व रक्ष (नाथ) ॥३॥

---

* See for meanings etc., in the Gems and Jewels Appendix given in this book. † (नव) ‡ मर्टीष्मणी - Amethyst p. 53.

अष्टाङ्गभूषणम्—उद्वाहे राजसन्माने ब्राह्मणनाञ्च संमते ॥
शिरस्त्रं मुकुटं हारः कुण्डलञ्चाङ्गदं तथा ।
कंकणं वालकं चैव मेखलाष्टाविति क्रमात् ॥ युक्तिकल्पतरुः ॥

शार्दूलविक्रीडितम् ।

वज्रेन्द्रैश्च गजेन्द्रमौक्तिकलसन्माहेन्द्रनीलैर्युतं
नागेन्द्रस्य मणिप्रभाभरणकं सद्रत्नविभ्राजितं ।
रुद्रोपेंद्र महेंद्रदैवतवरैः यद्वत्धृतं दीप्रकं
तद्वत् त्वं धर क्षुद्र विद्रुमयुतं भद्रं सुभद्रार्पितम् ॥४॥

इन्द्रच्छन्द सुरत्नगुच्छसहितं स्वच्छादि गोपुच्छकं
देवच्छन्द सुगुच्छमच्छ विजयच्छन्दं कलाकच्छपं ।
मुक्तागुच्छयुतं च मत्स्यतरळं सत्पेचिकापिच्छकं
गुच्छार्धं च गृहाण विच्छकवरं रत्नांगुळीच्छादकम् ॥

मुक्तारश्मिकलापकंच यमलां चैकावळीं चैडकां
काञ्चीदामसुशङ्खचर्चि मुकुलं मुक्तावळीं सारिकां ।
नन्द्यावर्त सुरत्नकृष्णपदकं हारावळीं चन्द्रिकां
कर्केतैर्विमलैर्कृतं स कुलिशं तारावळीं स्वीकुरु॥

चूडामण्डलवज्रसंकलिलसन्नक्षत्रसन्मालिकां
उत्तंसत्सरुबंधनं च तिलकं सङ्केतसन्मुद्रिकां ।
माणिक्यं मणिमण्डलं च वलयं चोत्तुङ्गमञ्जीरकं
नानाभूषणवीरकंकण मणीसोपानकं गृह्यताम् ॥७॥

मुक्ताहीरकसप्तकीं च रशनां ‡मर्दीष्मणीरञ्जितां
शोभास्यं शुभमूर्मिकावलिलसल्लक्ष्म्यादि श्रीकण्ठकां ।

वैदूर्यादि सुपञ्चरत्नखचितं चावापकं चार्पितं
वक्षस्याधरयावकं *मणिसरं प्रीत्याप्रभोस्वीकुरु ॥८॥

परिष्कारपञ्चकं - पञ्चचामरपञ्चकं च ।

त्रिराजिकं त्रिहीरकं त्रिकोणकं त्रिलोलकं
द्विराजिकं विराजितं विवाहकौतुकं वरं ।
सुराजपट्टकेतकीं च राजरत्नगर्भकं
वीरपादकङ्कणं गृहाण *जघन(मध्य)भूषणम् ॥१॥

हरिन्मणी सुरत्नशुकं हीरहंसभूषणं
महेन्द्रनीलमयूरं च शिरोनागभूषणं ।
सुसिंहवक्त्र कङ्कणं च हस्तिमुष्टिदण्डकं
गृहाण रत्नकोशयुक्त खड्गछुरी शस्त्रकम् ॥ २ ॥

बाहुनाग बाहुवलय बाहुवेष्टनादिकं
नाभिपूर नागरत्न नागवेणिभूषणं ।
ब्रह्मसूत्र मुरस्सूत्र हस्तसूत्र पत्रकं
गृहाण चित्र पत्रपाश्यकं च तालपत्रकम् ॥ ३ ॥

प्रगण्डपाश *प्रस्तरं प्रकीर्णकं च वर्णकं
प्रकोष्टभूषणं प्रदीप्त कर्णपूर कर्णकं ।

पञ्चाङ्गभूषणम्——कटकं चोपवीतं च कुण्डलं चांगुलीयकं ।
ग्रैवालंकरणं हैमं धृत्वा पञ्चाङ्गभूषणम् ॥

* मणिसरः——घटयति सघने कुचयुगगमने मृगमदरुचिरुचिते ।
मणिसरममलं तारकपटलं नखदश शशिभूषिते ॥ गीतगोविंदे॥

प्रगण्डनाग दण्डपत्र मण्डकं च दण्डकं
प्रवाळरत्नगुच्छकं गृहाण कर्णपर्णकम् ॥ ४ ॥

*शिखामणिं च शोणमणीशीर्ष केशभूषणं
*सज्जतिलक सन्धिभूष चुबुकरत्नभूषणं ।
रत्नस्तबक शिकलवेडि नीवि निगडभूषणं
गृहाण गोस्तनं विचित्रचित्र रत्नभूषणम् ॥५॥

आभरणसमर्पणफलम्—( मणिमुक्ताप्रवालादिरत्नान्यात्मप्रियं च यत् ।
यो दद्याद्देवमुद्दिश्य श्रद्धाभक्तिसमन्वितः ।
तत्तल्लोकं समासाद्य तत्तत्कोटिगुणं भवेत् ॥ )

ग्रहमणिसमर्पणम् ।

माणिक्यं तरणेः सुजात्यममलं मुक्ताफलं शीतगो-
र्माहेयस्य च विद्रुमो निगदितस्सौम्यस्य गारुत्मतं ।
देवेज्यस्य च पुष्यरागमसुराचार्यस्य वज्रं शनेः
नीलं निर्मलमन्ययोश्चगदितं गोमेदवैडूर्यके ॥

ग्रहरत्नं मया दत्तं ग्रहानुग्रहकारकम् ।
गृहाणानुग्रहाण त्वं शुभांग गृहनायक ॥

---

देवताविषये— केयूरं कटकं किरीटमकुटं ताटंककं कुण्डलं
काञ्चीकिंकिणि कंकणं च कमलं ग्रैवेयकं हंसकम् ।
नासामौक्तिक कण्ठसूत्रतिलकं सन्मुद्रिकां दण्डकं
मुक्ताहारकनूपुरं च दलकं संगृह्यतां कौतुकम् ॥

* Special words special composition.

अवकाशे सति

अलङ्कारकरणे आभरणधारणकाले पृथक् पठनीयश्लोकाः

रत्नादिहाराः (उपजातिवृत्तम्)

माणिक्यमुक्ताफलवज्रनील-
प्रवाळगारुत्मत निर्मितास्त्वम्।
आमुच्य कण्ठे विविधाश्च मालाः
वक्षस्थलं शोभय चंद्रकान्त ॥

पत्येनमः मौक्तिककण्ठाभरणं समर्पयामि ।
पत्येनमः गारुत्मतादिरत्नजटिलग्रैवेयकं समर्पयामि ।
पत्येनमः गोवर्द्धनोद्धारकपदकयुतपद्मरागमालां समर्प- [यामि।
पत्येनमः माणिक्यमुक्ताफलमालां समर्पयामि ।
पत्येनमः वज्रपदकसमेतहीरकनक्षत्रमालां समर्पयामि ।
पत्येनमः मरकतमणिमालां समर्पयामि ।
पत्येनमः त्र्यावळिमुक्ताहारं समर्पयामि ।
पत्येनमः पञ्चरत्नललंतिकां समर्पयामि ।
पत्येनमः स्वर्णप्रालंबिकां समर्पयामि ।

---

द्विर्द्वादशोऽर्धे गुच्छोऽथ पञ्चहारःफलं लता ।
अर्द्धहारश्चतुष्षष्टि गुंच्छमाणव मन्दराः ॥
अपि गोस्तनगोपुच्छौ अर्धमर्धे यथोत्तरम् ।
एकावल्यनुकण्ठी च हारः स्यादेकयष्टिकः ॥

पत्येनमः प्रवाळैकावलिं समर्पयामि ।
पत्येनमः हीरकविरचितमरकतचित्रितमकरकण्ठिकांसम-
पत्येनमः (पेरोज)पेरजमालां समर्पयामि । [र्पयामि
पत्येनमः स्फटिकमणिमालां समर्पयामि ।
पत्येनमः नानाविधरत्नहारान् समर्पयामि ।

नानाविध मुक्ताहार समर्पणम् ॥

पत्येनमः ॥

इन्द्रच्छन्दं समर्पयामि । विजयच्छन्दं समर्पयामि ।
देवच्छन्दं समर्पयामि । रश्मिकलापं समर्पयामि ।
गुच्छं समर्पयामि । अर्द्धगुच्छं समर्पयामि ।
माणवं समर्पयामि । अर्द्धमाणवं समर्पयामि ।
हारं समर्पयामि । अर्द्धहारं समर्पयामि ।
गोस्तनं समर्पयामि । गोपुच्छं समर्पयामि ।
मन्दरं समर्पयामि । नक्षत्रमालिकां समर्पयामि ।
पञ्चलतादिहारफलं समर्पयामि ।
नानाविध मुक्ताहारान् समर्पयामि। [हाराण्यपि स-मि।
गजमेघज वराहमत्स्यज शंखवेणुजादि महामुक्ताफल-

---

मुक्ताहारनामानि - हारपञ्चकम् ॥

१. देवच्छन्दश्शतं साष्टमिन्द्रच्छन्द स्सहस्रकं ।
तस्यार्धे विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् ॥

२. हारो मुक्तावली स्त्रीस्यात् तद्भेदा यष्टिसंज्ञया ।
द्विर्द्वादशोऽर्धो गुच्छोऽथ पञ्चहारः फलंलता ॥
३. अर्धहारः चतुष्षष्टिः गुच्छमाणव मन्दराः ।
अपिगोस्तन गोपुच्छावर्धमर्धं यथोत्तरम् ॥
४. यष्टिर्नक्षत्र मालिका सप्तविंशति मौक्तिका ।
गुडकैर्मणि सोपानं चाटुकारश्च हेमजैः ॥
५. ग्रैवेयकं कण्ठभूषा लम्बनं तु ललन्तिका ।
हारमध्यस्थितं रत्नं तरलो नायकोऽपि च ॥
मुक्ता मयाति मधुरा मसृणावदात-
च्छायाधिराग तरलामल सद्गुण श्रीः ।
साध्वीसतः भजतु कण्ठमसौ प्रियेण-
हारावली विरचिता पुरुषोत्तमेन ॥

मुक्ताहारधारणफलम्—मुक्तानां हारविधृतिः दाहपित्तविनाशिनी ।
कान्ति हर्षं नेत्रसुखं ददातीति प्रकीर्तितम् ॥ सालग्रामनिघण्टुः॥

मुक्ताहार संबन्धचाटुश्लोकम्—हारोयं हारिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥

Meaning, the pearl necklace wallows on the breasts of the deer eyed damsels. When such is the state of Muktas (मुक्ता) the Liberated Souls, where are we the slaves of the cupid?

## ॥ हारविवेचनम् ॥

सुरभूषणं लतानां सहस्रमष्टोत्तरं चतुर्हस्तम् ।
इन्द्रच्छन्दो नाम्ना विजयच्छन्दस्तदर्धेन ।
शतमष्टयुतं हारो देवच्छन्दोह्यशीतिरेकयुताः ।
अष्टाष्टकोऽर्धहारो रश्मिकलापश्च नवषट्कः ।

द्वात्रिंशनातु गुच्छोविंशन्या कीर्तितोऽर्ध गुच्छाख्यः ।
षोडशभिर्माणवको द्वादशभिश्चार्ध माणवकः ।
मन्दर संज्ञोऽष्टाभिः पञ्चलताहारफलकमित्युक्तं ।
सप्तविंशति मुक्ता हस्तो नक्षत्रमालिनी ।
अन्तरमणि संयुक्ता मणिसोपानं सुवर्ण गुलिकैर्वा ।
तरलक मणिमध्यं तद्विज्ञेयं चाटुकारमिति ।
एकावलीनाम यथेष्ट संख्या हस्तप्रमाणामणि विद्प्रयुक्ता ।
संयोजिताय मणिनातु मध्ये यष्टीति सा भूषण विद्भिरुक्ता ॥

## NAMES AND PARTICULARS OF VARIETIES OF PEARL GARLANDS.

1. इन्द्रच्छन्दः - Pearl garland containing 1008 strings with four cubits in length is called Indrachchhanda

| | | | | |
|---|---|---|---|---|
| 2. विजयच्छन्दः | do | 504 | do | Vijayachchanda |
| 3. देवच्छन्दः | do | 108 or 81 | do | Devachchhanda |
| 4. हारः | do | 108 | do | Hara |
| 5. अर्धहारः | do | 64 | do | Ardhahara |
| 6. रश्मिकलापः | do | 54 | do | Rasmikalapa |
| 7. गुच्छहारः | do | 32 | do | Guchchhahara |
| 8. अर्धगुच्छः | do | 20 | do | Ardhaguchchha |
| 9. गोपुच्छः | do | 16 | do | Gopuchchha |
| 10. माणवकः | do | 16 | do | Manavaka |
| 11. मन्दरः | do | 8 | do | Mandara |
| 12. हारफलः | do | 5 | do | Phalaka or Phala or Hara Phala or Panchalata |
| 13. एकावली | do | 1 | do | Ekavali |
| 14. नक्षत्रमालिका | do | 27 | do | Nakshatramalika |

कुण्डलादि - कर्णाभरणानि ।

सुकर्णिके वज्रविनिर्मिते च
हरिन्मणी मौक्तिक रत्नयुक्ते ।
कर्णावतंसौ मणिकुण्डले च
गृहाणकर्णाभरणानि नाथ ॥

---

Then there are Mani Sopanam, Chatukaram, Ekavali, etc.

The following stanza gives the colours of Pearls :—

छायापाटलनीलपीतधवलास्तत्रापिसामान्यतः ।
सप्तानां बहुशो न लब्धिररिति चेच्छौक्तेयकं तूल्वणम् ॥

EUROPEAN NAMES FOR DIFFERENT KINDS OF PEARLS.

1. Anie (perfect in sphericity and lustre, 2. Anatharie, 3. Masengœ, 4. Kallippo, 5. Korowel, 6. Peedal, 7. Oadwœ, 8. Mandangœ, 9. Kural, 10. Thool, 11. Bouton pearls, 12. Buroque, 13. Cog-de-pearls, etc.

EIGHT SPECIAL VARIETIES OF EXTRAORDINARY PEARLS.

नागदन्त भवाश्वाग्र्या कुम्भसूकर मत्स्यजाः ।
वेणु नाग भवाश्रेष्ठाः मौक्तिजं मेघजं वरम् ॥

Rare availables :—शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥

मकरकुण्डल— वनमाला निवीतांगो लसच्छ्रीवत्स कौस्तुभः ।
महाकिरीटः कटक स्फुरन्मकर कुण्डलः ॥

कर्णाभरणानि— विभूषणं परिष्कारः कर्णिकाकर्णभूषणम् ।
उत्क्षिप्तिका तु कर्णाकस्तालपत्रं तु तालकम् ॥
कर्णपूरस्तु पुष्पाद्यैः ताटंकोदन्तकादिभिः ।
वालिका कर्णपृष्ठस्था कुण्डलं कर्णवेष्टनम् ॥

पत्येनमः वज्रखचितकर्णिके समर्पयामि ।
पत्येनमः मुक्तामरकत मणियुतकुण्डले समर्पयामि ।
पत्येनमः हीरकविरचित त्रिकोणवालिकां च समर्पयामि

केयूरादि - बाहुभूषणानि ।

सुदीप्रवज्रैः खचितानि नाथ
केयूरकानि ह्यथ कल्पितानि ।
नागाङ्गदं रत्नविनिर्मितं च
प्रगण्डयोस्ते विनिवेशयामि ॥

पत्येनमः वज्रखचितकेयूरके समर्पयामि ।
पत्येनमः मणिमयनागाङ्गदं समर्पयामि ।
पत्येनमः बाहुवलयं च समर्पयामि ।

कटकादि - मणिबंधाभरणानि ।

रत्नैस्सुवर्णेन च निर्मितेन
विभ्राजमानेन सुकङ्कणेन ।
विभूषयत्वं कटकादिना तु
हस्तद्वयं नाथ मयाऽर्पितेन ॥

---

बाहुभूषणानि मणिबंधाभरणानि च

केयूरमंगदं भूषा दोर्मूले कंकणं करे ।
आवापकः पारिहार्यं वलयं कटकोस्त्रियां ॥

पत्येनमः सिंहललाटयुक्तसुवर्णकटके समर्पयामि ।

पत्येनमः रत्नाङ्कितसुवर्णकंकणे समर्पयामि ।

पत्येनमः मरकतादिपञ्चरत्नखचितपारिहार्यं समर्पयामि।

पत्येनमः घटिकायंत्रयुतावापकं समर्पयामि ।

पत्येनमः वीरकङ्कणं च समर्पयामि ।

मुद्रिकोर्मिकादि - अंगुल्याभरणानि
(इन्द्रवज्रावृत्तम्)

नानासुरत्नैश्च विनिर्मितानि
सङ्केतनामाक्षर चिह्नितानि ।
चित्रांगुलीयानि मनोहराणि
गृहाण तान्यंगुलि भूषणानि ॥

पत्येनमः माणिक्यमुद्रिकां समर्पयामि ।

पत्येनमः मरकतमुद्रिकां समर्पयामि ।

पत्येनमः वैडूर्यांगुलीयकं समर्पयामि ।

पत्येनमः इन्द्रनीलमुद्रिकां समर्पयामि ।

पत्येनमः गोमेदोर्मिकां समर्पयामि ।

पत्येनमः वज्रांगुलीयकं समर्पयामि ।

पत्येनमः साक्षरांगुळिमुद्रां च समर्पयामि ।

### मेखलादि-कट्याभरणानि

सुमेखलां हीरकरत्नयुक्तां
बलप्रदां दीप्तिकरीं सुशोभाम्
कटीतटेकान्त समर्पयामि
सौभाग्यकल्याणकरो भव त्वम्॥

पत्येनमः रत्नखचितमेखलां समर्पयामि ।
पत्येनमः स्वर्णकटिश्रृंखलां समर्पयामि ।
पत्येनमः त्सरुबन्धनं च समर्पयामि ।

### नूपुरादि - पादाभरणानि

प्राणेश ते रत्नसुवर्णयुक्ते
मञ्जीरके नूपुरके तथैव ।
सुकिंकिणी नादयुते सुबुद्ध्या
सुपादयो र्धारय मत्प्रदत्ते ॥

पत्येनमः रत्नखचित मञ्जीरके समर्पयामि ।
पत्येनमः सुवर्णनूपुरे समर्पयामि ।
पत्येनमः वीरपादकटकं समर्पयामि ।
पत्येनमः पादांगुलीयकानि च समर्पयामि ।

---

कट्याभरणानि— कटिसूत्रं सारसनं मेखलारशना च सा ।
स्त्रीकट्यां सप्तकी काञ्ची पुंस्कट्यां शृंखलात्रयी ॥
पादभूषणाणि—शिञ्जिनीना तुलाकोटिर्मञ्जीरो नूपुरोस्त्रियौ ।

### किरीटादि - शिरोभूषणानि

चूडामणिं हीरकिरीटकं च
ललाटिकां शोणमणी विनिर्मितां ।
मुक्ता सुतूरं सितपिञ्छशेखरं
गृहाण भो नाथ मयाऽर्पितानि ॥

(अनुष्टुप् वृत्तम्)

चन्द्राभरणरत्नाञ्चनमकुटं मणिशेखरम् ।
मुक्ताललामकं चैव धरभृङ्गारशेखर ॥

पत्येनमः किरिटं समर्पयामि ।
पत्येनमः मणिमय मकुटं समर्पयामि ।
पत्येनमः वज्रखचितशेखरं समर्पयामि ।
पत्येनमः मौक्तिकतूरकं समर्पयामि ।
पत्येनमः ललाटमुक्तावलिं समर्पयामि ।
पत्येनमः चन्द्रभूषणं समर्पयामि ।
पत्येनमः सूर्यमण्डलं च समर्पयामि ।
पत्येनमः उष्णीशशिरोवेष्टनादि सहित नानाविधशिरो-
(भूषणानि समर्पयामि ।

---

मौलिः कोटीर मुष्णीशं किरीटं मकुटोस्त्रियां ।
चूडामणिः शिरोरत्नं स्वस्तिकस्तु त्रिकोणकः ॥

## अन्यभूषणानि

अन्यानि नानाविधभूषणानि
ममेच्छया साधुविनिर्मितानि ।
आमोचयाम्येव तवाङ्गकेषु
विचित्ररत्नैः खचितान्यमूनि ॥

पत्ये नमः रत्नखचितस्वर्णसूत्रयुतनानादेशनानाकाल-प्रदर्शकघटिकायंत्रं समर्पयामि ।

„ कर्केतनमरकतादिमणियुतरत्नस्तबकं स-मि ।

„ नीलगारुत्मतादिनिर्मितमयूराभरणं समर्पयामि

„ मणिमयमङ्गलप्रद स्वस्तिकं समर्पयामि।

„ गजाश्वादिमुखमुष्टियुत रत्नखचितहेमदण्डं „

„ रत्नकोशसन्निविष्ट वीरखड्गं समर्पयामि ।

„ नक्षत्रपुष्पं समर्पयामि ।

„ नन्द्यावर्तं समर्पयामि ।

„ नखद्योतं समर्पयामि ।

„ कमल तिलक, ममल धवळ कुलिश तरळ, विमलक दलक, पुलक जटिल नवल यमलादि-नानाभरणानि समर्पयामि ॥

„ नानारत्नखचितनानाभरणानि समर्पयामि ।

„ अष्टोत्तरशताधिकअनेकाभरणानि समर्पयामि।

## *पुष्पालङ्कारः

सुगन्धिपुष्पपत्राणां धारणं कान्तिकारणम् ।
पापरक्षोग्रहहरं कामदं श्रीविवर्धनम् ॥
चक्षुष्यं दाहशमनं सौमनस्यञ्च जायते ॥

पुष्पमाला ।

माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो ।
मयाऽऽहृतानि पुष्पाणि प्रीत्यर्थं प्रतिगृह्यताम् ॥१॥

(वसन्ततिलकावृत्तम्) ।

वासन्तिकाकरुणमल्लिसुपारिजात-
सेवन्तियूथिवकुळादिसुपद्ममालाम् ।
सौगन्धिकोत्पलसुलाङ्गलिकर्णपूरं
गृह्णीष्व कैतककुरण्टकगर्भकं त्वम् (च) ॥२॥

पत्ये नमः कण्ठे पुष्पमालां समर्पयामि ।
" पुष्पस्रजं समर्पयामि ।
" कर्णपूरं समर्पयामि ।
" गर्भकं समर्पयामि ।

---

*Defination of Pushpa - पुष्पशब्दनिर्वचनम्
पुष्पसंवर्धनाच्चापि पापौघपरिहारतः ।
पुष्कलार्थ प्रदानाच्च पुष्पमित्यभिधीयते ॥

पुष्पधारणप्रयोजनम्——स्रक्गन्धवस्त्ररत्नानां धारणं प्रीतिवर्धनम् ।
रक्षोघ्नमर्घ्यमायुष्यं सौभाग्यकरमुत्तमम् ॥

न व्रतेनोपवासेन धर्मेण विविधेनच ।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥



प्रालंबं च ललामकं च मृदुलं वैकक्षकं शेखरं ।
नाथस्वीकुरु पुष्पभूषणमिदं प्रभ्रबृकं सुन्दरम् ॥

अवकाशे सति

नानाविधपुष्पमालासमर्पणम् ।

## मल्लिकामालिकाकुन्द जाती चम्पकमालिकां।
## मालतीयूथिकामालां स्थलपद्मस्य मालिकाम् ॥३॥

---

मालाशब्दनिर्वचनम् - Defination of Mala.

माति मानहेतुर्भवतीति मा। मां=शोभां। लातीति ला। मा+ला=माला

दाने माधातुरुद्दिष्टो लासि मां हरिवल्लभे।

समस्तेभ्यश्च भक्तेभ्यः तेन माला निगद्यते ॥

नित्यं पुष्पधारणम्—सुपुष्पाणि सुगन्धीनि नित्यं शीर्षे प्रधास्यते ।

नानासमये भिन्नपुष्पधारणं—अस्नातैः मल्लिकाधार्या सुस्नातै र्जातिबिल्वकम् ।

अभ्यङ्गे केतकी धार्या धार्यं चोत्पलकं सदा ॥

सर्वकालपुष्पधारणं—जाती कुन्दञ्च नैपालं श्रीखण्डं बिल्वमल्लिकम्।

मकरन्देन संयुक्तं शिरसा धारयेन्नरः ।

त्रिदोष शमनायैव सर्वकाले प्रधारयेत् ॥

अमुक पुष्पगुणाः—कैतकं वकुलं पुष्पं श्रीखण्डं शतपत्रकं ।

गौल्लालकं चम्पकञ्च वातश्लेष्महरं परं ॥

वर्षाकाले पुष्पधारणं- श्रीबकं मरुवं चैव नीलोत्पल सवत्सकौ ।

कुब्जकं पाटलं चैव श्रीखण्डञ्च तथैव च ।

नात्युष्णं न च वा शीतं सर्वदोषनिबर्हणम्।

निर्मलं नेत्रदोषघ्नं वर्षाकाले प्रधारयत् ॥

Flowers used with the ingredient of purified Camphor.

मन्दारमरुवं चैव नीलोत्पलकुमुद्वितम् ।

रक्तोत्पलं यूथिकाञ्च कर्पूरैः सह धारयेत् ॥

वकुळोत्पलमालां च कुब्ज पाटलमालिकाम्।
पुन्नागकेतकीमालां गृहाण मम वल्लभ ॥४॥

पत्ये नमः॥ पारिजातकुट्मलमालां समर्पयामि ।
" पीतवर्णवकुळमालां समर्पयामि ।
" श्वेतवर्ण कुन्दमालां समर्पयामि ।
" हरितवर्ण दमनकमालां समर्पयामि ।
" श्वेतवर्ण जातीमालां समर्पयामि ।
" रक्तवर्ण स्थलकमलिनीमालां समर्पयामि ।
" श्वेतवर्ण मल्लीमालां समर्पयामि ।
" रक्तवर्ण करवीरमालां समर्पयामि ।
" नीलवर्ण नीलोत्पलमालां समर्पयामि ।
" श्वेतवर्ण पन्नीरपुष्पमालां समर्पयामि ।
" रक्तवर्ण पद्मकुट्मलमालां च समर्पयामि ।

---

Flowers to be used with Musk

जातीपुष्पं तथा वेला जाम्भजं कुटजं तथा ।
पाटलं च बृहत्पुष्पं बकुलं चम्पकं तथा ।
श्रीखण्डं चैव गौल्लालं कस्तूर्या सह धारयेत्

जातीपुष्पगुणाः-— त्रिदोषश्मनी जाती महादाह विनाशिनी ।
गौल्लालगुणाः— सुगन्धं दोषशमनं गौल्लालं पुष्पमुच्यते ॥
उत्पलगुणाः— पित्तहृद्विशनं चैव चक्षुष्यं चोत्पलं स्मृतम् ।
श्लेष्मवातप्रशमनं उष्णवीर्यं च निर्मलम् ॥

न व्रतेनोपवासेन धर्मेण विविधेनच ।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥



प्रालंबं च ललामकं च मृदुलं वैकक्षकं शेखरं ।
नाथस्वीकुरु पुष्पभूषणमिदं प्रभ्रबृकं सुन्दरम् ॥

सुगन्धपत्रमालासमर्पणम् ।

दमनैर्मरुवैर्बालैः देवदारुतमालकैः
माचीपत्रैर्गंगपत्रैः तथा रुद्रजटादिभिः ।
सुगन्धमंजरीभिश्च मालातृणविनिर्मितां
पत्रमालां प्रदास्यामि प्राणेश प्रतिगृह्यताम् ॥५॥
पत्ये नमः ॥ सुगन्धपत्रमालां च समर्पयामि ॥

( पुष्पाभरणादिपुष्पभूषणानि । नानाविचित्रपुष्पसमर्पणम् । पुष्पांदोळनम् । पुष्पमण्टप पुष्पमञ्चक पुष्परथाद्यनेकपुष्पालङ्कारसमर्पणम् । पुष्पस्तबक पुष्पगुच्छ । पुष्पांबु पुष्पसार पुष्पद्रवादिसमर्पणं च )

पुष्पभूषणपंचकं ( शार्दूलविक्रीडितवृत्तम् )

जातीचम्पकमालतीदमनकैः कुब्जैश्च नीलोत्पलैः
मन्दारैर्मरुवैश्च कुन्दकुटजैस्सौगन्धराजैः कृतम् ।
प्रालम्बं* कमलं ललाम मृदुलं वैकक्षकं शेखरं *(च ललामकं च)
नाथ स्वीकुरु पुष्पभूषणमिदं प्रभ्रष्टकं सुंदरम् ॥१॥
पत्येनमः ॥ शेखरं समर्पयामि ।
,, प्रभ्रष्टकं समर्पयामि ।

---

केतकीपुष्पगुणाः— पुष्पाणां प्रवरं चैव केतकीपुष्पमुच्यते ।
ईषदुष्णं सुगन्धं च सुशीतं दृष्टिदायकम् ॥
शतपत्रगुणाः— शिरोभ्रमविनाशार्हं शतपत्रं सुशोभनम् ।
मल्लीपुष्पगुणं— आधार्यं मल्लिकापुष्पं दृष्टिहानिकरं परम् ॥
चम्पकपुष्पगुणाः— चम्पकं वातशमनं चक्षुष्यं विशदं शुभम् ॥

पत्येनमः॥ ललामकं समर्पयामि ।
„ प्रालम्बं समर्पयामि ।
„ वैकक्षकं समर्पयामि ।

मल्लीपुष्पसुकङ्कणं च सुमनः प्रावारकं चोलकं
मध्ये श्रीकरवीरकुद्मलयुतं पुष्पाङ्गिकामङ्गदम् ।
यूथीदण्डकसूचिमल्लिमकुटे हारं शुकाद्यान्वितं
सर्वं स्वीकुरु पुष्पभूषणमयं शृंगारमत्यद्भुतम् ॥ २ ॥

पत्येनमः॥ पुष्पचोलकं समर्पयामि ।
„ पुष्पांगिकां समर्पयामि ।
„ हस्तयोः पुष्पकंकणं समर्पयामि।
„ पुष्पकेयूरे समर्पयामि ।
„ पुष्पप्रावारकं समर्पयामि ।
„ पुष्पमकुटं समर्पयामि ।
„ पुष्पदण्डं च समर्पयामि ।

मायूरैश्शुकपुष्पकोकिलसुमैः श्रीव्याघ्रचेलीबकैः
सिंहास्यैश्च गजोष्ट्रकांडिकुसुमैरश्वप्रवाराहकैः ।
पुन्नागैश्शुभनागचम्पकसुमैस्सन्नागलिङ्गैः कृतं
नानापुष्पसुगन्धमञ्जरियुतं सद्भूषणं गृह्यताम् ॥ ३ ॥

नेपालीसुमदेवमालितिलकैर्बालैश्च मालातृणैः
मल्लीभिर्ललनाप्रियैश्चमरिकैर्नीलाम्बरैः कल्पितम् ।
पुष्पान्दोळनमम्बुजैर्विलसितं मुक्तागुलुच्छान्वितं
चित्रं पुष्परथादिसर्वकुसुमालंकारमंगीकुरु ॥ ४ ॥

पत्ये नमः॥ नानाविधपुष्पालंकारान् समर्पयामि ।

( गोविन्दीय शार्दूल विक्रीडितम् )

वनमाला नवमालिकाऽरुणशमीपद्मोत्पलाम्लानकं
कृतमाला वटरूषकं च त्रपुषं चाणीक श्वेतारुणम् ।
वनराजादि सुकामराज करुणं चाम्रात निर्गुंडिकां
गिरिमायूर सुबीजपूरकुसुमं प्रीत्या गृहाण प्रभो ॥

पुष्पस्तवकः (उपजातिवृत्तम्)

श्रीरामबाणेन च मौसलेन
कोदण्डपुष्पेण च मुद्गरेण ।
चाम्पेयकुब्जाम्बुज हालिकेन
विनिर्मितं मन्मथबाणकेन ।
प्राणेश पद्मारुणकोमलेन
रथांगशङ्खाम्बुजलाञ्छितेन ।
रत्नांगुळीयैरतिशोभितेन
गृहाण पुष्पस्तबकं करेण ॥

पत्ये नमः॥ दक्षिणहस्ते पुष्पस्तबकं समर्पयामि ।

केतक्यादिपुष्पगुच्छम् ।

पुष्पलोचनपुष्पाद्यैः पीतचामरपुष्पकैः ।
पुष्पप्रिय गृहाण त्वं पुष्पगुच्छं च निर्मितम् ॥

पत्ये नमः॥ पुष्पगुच्छं च समर्पयामि ।

पुष्पोदकं - हिमाम्बु - वा - पन्नीरं ।

भूपद्मवृक्षकमलाभिधरक्तकुब्ज-
गोलाप (सेवन्ति) काख्यकुसुमैस्सुविनिर्मितेन ।
रत्नोक्षिणीनिहितगांगजलैः कृतेन
प्रोक्षामि निर्मलसुगन्धिहिमाम्बुना त्वाम् ॥

पत्येनमः॥ स्थलपद्मादि सुगंधि पुष्पहिमाम्बुना प्रोक्षामि।

पुष्पसारः (Essence extract of flowers scent)

पुष्पोद्भवं पुष्पसारं पुष्पस्वेदं सुगन्धदम् ।
नानापुष्पसुगंधाम्बु प्रावारे प्रतिगृह्यताम् ॥

पत्येनमः मुखमार्जनशाटिकादिषु पुष्पसारं समर्पयामि॥

सुगान्धिद्रवः ( अत्तर् - रुह् )

संसाधितं चम्पकमल्लिकाभिः
जातीसुकुब्जैः कुरवैरुशीरैः ।

नास्तिभर्तृसमोनाथो नास्तिभर्तृसमंसुखं ।
विसृज्यधनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥



यूथीदण्डकसूचिमल्लिमकुटे हारांशुकाद्यन्वितं
सर्वस्वीकुरुपुष्पभूषणमयं श्रृंगारमत्यद्भुतं ॥

नानासुगन्धिद्रवसारमेतं
आजिघ्र सर्वोत्तमसौरभं त्वम् ॥

पत्येनमः॥ प्रावारकादिषु नानाविधसुगन्धिद्रवं च स-मि

परिमळचूर्णं ( च वा ) वा ( अर्गजा )

वासयोगं गन्धचूर्णं पूर्णचन्द्रनिभानन।
कीर्णार्थं तूर्णमानीतं गृहाण करुणार्णव ॥

पत्येनमः॥ सुगन्धचूर्णं समर्पयामि।
पत्येनमः॥ वासयोगं समर्पयामि ।

आदर्शः ।

मार्ताण्डमण्डलनिभं नवरत्नचित्रं
भक्त्या धराम्यभिमुखं मणिदर्पणं ते ।
पूर्णेन्दुबिम्बसदृशं वदनं स्वकीयं
अस्मिन् विलोकय विशालविलोचन त्वम्॥

पत्येनमः॥ स्वर्णबद्धमणिमयमुकुरं दर्शयामि ।

---

दर्पणादर्शफलम्— आदर्शालोकनं प्रोक्तं माङ्गल्यं कान्तिकारकं ।
पौष्टिकं बल्यमायुष्यं पापालक्ष्मी विनाशकम् ॥

आदर्शकरणप्रकारः— कांस्य सारं प्रगृह्णीयात् पूर्णचन्द्राकृतीकृतम् ।
पालिका पादवत् पादं सिंहव्यालोपरिस्थितम् ।
एवं कृत्वा तु संग्राह्य मादर्शनमिति स्मृतम् ॥

अथाङ्गपूजा ।

कुन्दैः कोकनदैः कदंब कुमुदैः कोदण्डकैः कोकिलैः
कुब्जैः कामज कामराज कुटजैः केरण्टकैः केतकैः ।
कल्हारैः करवीर किंशुक शुकैः श्रीकांचनारैः सुमैः
कौसुंभैः ककुभैः करोमि कुरवैः सर्वांगपूजां प्रभो ॥

सर्वतीर्थस्नानफलप्रदपादोदकाय नमः पादौ पूजयामि ॥

| | | |
|---|---|---|
| मत्तमातंगगमनाय नमः | जंघे | ,, |
| प्रणामप्रवीणाय नमः | जानुनी | ,, |
| अश्वारोहणोत्सुकाय नमः | ऊरू | ,, |
| रत्नशृङ्खलाय नमः | कटिं | ,, |
| गंभीरनाभये नमः | नाभिं | ,, |
| त्रिवळीमण्डिताय नमः | उदरं | ,, |
| प्रेमालिङ्गनदायकाय नमः | वक्षस्थलं | ,, |
| हृदाधाराय नमः | हृदयं | ,, |
| आजानुबाहवे नमः | बाहू | ,, |
| वृषस्कन्धाय नमः | स्कन्धौ | ,, |
| भगवदर्चनतत्पराय नमः | हस्तौ | ,, |
| गानविशारदाय नमः | कण्ठं | ,, |
| सुन्दरचिबुकाय नमः | चिबुकं | ,, |
| बिम्बोष्ठाय नमः | ओष्ठौ | ,, |

| | | |
|---|---|---|
| नामसंकीर्तनरताय नमः | जिह्वां | पूजयामि |
| हविर्गन्धप्रियाय नमः | नासिकां | ,, |
| रक्तान्तनयनाय नमः | नेत्रे | ,, |
| रत्नपुण्ड्रधारिणे नमः | ललाटं | ,, |
| वेदश्रवणासक्ताय नमः | श्रोत्रे | ,, |
| धूपवासितकेशाय नमः | शिखां | ,, |
| शरच्चन्द्रप्रतीकाशाय नमः | मुखं | ,, |
| पत्नीचूडामणये नमः | शिरः | ,, |
| श्रीमन्नाथाय नमः | सर्वाङ्गाणि | ,, |

॥ पुष्पदानस्तोत्रम् ॥

॥ पुष्पाष्टकम् (शार्दूल विक्रीडित वृत्तम् ॥

माकन्दं मुचुकुन्द कुन्दकुसुमं तुंबं च निंबं बकं
मन्दारं मदनंमुकुन्द मृदुलं चेन्दीवरं सुंदरं ।
मायूरं मरुवं मुनिद्रुमसुमं सन्मोदिनी मुद्गरं
पुष्पंस्वीकुरु मंदमारुतमिदं चाष्टापदं दोहदम् ॥ १ ॥

माल्लूर मधुमालतां च मलय लाध्र मधूक तथा
मध्याह्नं मधुपिण्डिकां च मधुरं मेध्या मधूपिप्पलं ।

पुष्पपत्रादिदानप्रकारः— पुष्पं वा यदि वा पत्रं फलंनेष्ट मधोमुखम् ।
पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पयेत् ॥

माधव्यं मधुचंप मुष्टिकयुतं मुक्तं तथा मंजुलां
मालां स्वीकुरु मिश्रवन्तिसहितां पुष्पं मनोरञ्जितम् ॥२॥

सालं ताल तमाल हालि तिलकं रक्तोत्पलं चोत्पलं
वालं कुण्डल भिण्डिलं विचिकिलं नीलोत्पलं कोमलं ।
नीलं चातंगलं रसाल लकुचं श्रीपाटलं मौसलं
गौल्लालं स्थलपद्मकं कुवलयं पुष्पं प्रभो गृह्यताम् ॥३॥

नेपाली च सुदेवमालि कमली सत्कुण्डली लांगली
शेफाली सुमशाल्मली च लवली बिल्वीदली वापुली।
हाली चांजलि काकमालि मुकुली नीली तथा कंदली
नानापुष्प सुमंदवल्लि सहिता मल्ली च संगृह्यताम्॥ ४॥

कौमारीं कनकांबरीं सहचरीं कादंबरीं मंजरीं
कान्तारीं च हरीतचंपककुसुमं नीलांबरीं केसरीं ।
काश्मीरींच शिरीष वार्षिकसुमं तर्कारि शंखोदरीं
गौरीं स्वीकुरु पुण्डरीक चमरीं शोभाकरीं श्रीकरीम् ॥५॥

---

पुष्पप्राधान्यं— न रत्नैर्न सुवर्णेन न वित्तेन च भूरिणा ।
तथा प्रसाद मायाति यथा पुष्पैर्जनार्दनः ॥

पुष्पाभावे इतरद्रव्याणि— पुष्पाभावेन देयानि पत्राणि च जनार्दने ।
पत्राभावे जलं दद्यात् तेन पुण्यमवाप्यते ॥

विविधपुष्प पर्युषितकालनिर्णयः—पञ्चयामं जातिकुसुमं नैवारं द्विमुहूर्तकम् ।
त्रिरात्रंतूत्पलं चैव पंचरात्रं तु केतकी ।

गान्धारंच सुरंगकं च तगरं सारंगनारंगकं
पुन्नागं च लवंगभृंगकुसुमं चारग्वधं रोचनं ।
गोलापंच सुगन्धि नागरसुमं गन्धं च गन्धोत्पलं।
गोविन्दप्रिय भो प्रियंगुसहितं प्रीत्या प्रभो स्वीकुरु ॥

भारद्वाजसुभार्गवीच भरटीभद्राक्ष रुद्राक्षकं
द्रोणं पुष्पमगस्त्य शौनकसुमं लाक्षाकुबेराक्षकं ।
तीर्थंचापि तपच्छदं च वरुणं श्रीशक्रपुण्ड्रं सुमं
चाब्जं चार्जुन सर्जकं गज जया शोभांजनं गृह्यताम् ॥

सन्ध्याराग सुगंधराज सुरभिं सत्सूर्यकान्तं सुमं
सिन्दूरं सुम सिन्धुवार सुरणीं सिंहास्य सिद्धेश्वरं
सैरेयं सितकुब्जकं सुकुसुमं सप्तच्छदं सप्तलां
सौगन्धि सुरपाणिकादि च सुमान्येतानि च स्वीकुरु ॥

---

द्विरात्रं शतपत्रं च अर्धरात्रं तु मल्लिका ।
अहोरात्रं चम्पकंतु यूथिका द्विमुहूर्तकम् ॥
श्रीखण्डमेकरात्रं तु बकुलं माधवीं तथा ।
श्रीपर्णं यावदाहारं तावत्कालं तु धारयेत् ॥
मन्दार मरुवं चैव दामनञ्च सुपाटलं ।
यावत्कालं भजेत् गन्धं तावत्कालं प्रधारयेत् ॥

प्रसिद्धपञ्च पुष्पाणि—  करवीरं तथा जातीं चम्पकं सरसीरुहं ।
पाटलीकुसुमं चापि पञ्चपुष्पं प्रकीर्तितम् ॥

## पुष्पार्चना - रत्नार्चना च

चामन्तिकाबकुळ पाटल रक्तकुब्ज-
पात्रन्तियूथि करवीर सुवर्णपुष्पैः ।
मुक्ताप्रवाळमणि हीरकपद्मरागैः
त्वामर्चयामि हृदयेश्वर नेत्रकान्त ॥

अस्य श्रीपत्यष्टोत्तर शतनामस्तोत्र महामन्त्रस्य गोविन्दऋषिः अनुष्टुपच्छन्दः प्राणनाथो देवता पं-बीजं वं-शक्तिः मं-कीलकं श्रीपतिचरणारविन्दपूजने विनियोगः ॥

अष्टोत्तरशतनामार्चना ॥

| नं. | नामावळिः | पुष्पनामानि | | द्राविडनामानि |
|---|---|---|---|---|
| १. | पत्ये नमः | जातीपुष्पं समर्पयामि | | ஜாஜீ புஷ்பம் |
| २. | कान्ताय नमः | मालतीपुष्पं | ,, | மாலதீ புஷ்பம் கொடி ஜாஜீ |
| ३. | दयासिन्धवे नमः | वासन्तीपुष्पं | ,, | பசுமுல்லைப்பூ |
| ४. | शान्ताय नमः | चामन्तीपुष्पं | ,, | சாமந்திப்பூ |
| ५. | दान्ताय नमः | सेवतीपुष्पं | ,, | [illegible] ரோஜா [illegible]<br>முள்ள சின்ன ரோஜா |
| ६. | अनसूयकाय नमः | उपजातीपुष्पं | ,, | வெள்ளை ஜாஜீ பூ |
| ७. | पत्नीप्रियाय नमः | शिवलिङ्गपुष्पं | ,, | நாக புஷ்பம் |
| ८. | शुभाङ्गाय नमः | स्वर्णजातीपुष्पं | ,, | மஞ்சள் ஜாஜீ பூ |
| ९. | प्राणनाथाय नमः | यूथिकापुष्पं | ,, | முல்லை பூ |

ययापतिः पूजितश्च श्रीकृष्णः पूजितस्तया ।
पतिव्रता व्रतार्थं च पतिरूपी हरिः स्वयम् ॥



गृहीत्वा शुक्लपुष्पं च भक्तितः पूजयेत्पतिं ।
शिवत्वेनपतिंध्यात्वा पूजयेद्दिव्यनामभिः ॥

| नं. | नामावलिः | पुष्पनामानि | द्राविडनामानि |
|---|---|---|---|
| १०. | वरप्रदाय नमः | नवमालिकापुष्पं ,, | இருவாட்சிப் பூ |
| ११. | सर्वसौभाग्यदात्रे नमः | केतकीपुष्पं ,, | தாழம் பூ |
| १२. | सतीप्राणपरायणाय नमः | चम्पकपुष्पं ,, | ஸம்பங்கி பூ |
| १३. | नमस्याय नमः | लताचंपकपुष्पं ,, | கொடி ஸம்பங்கி பூ |
| १४. | पूज्याय नमः | सितकुब्जकपुष्पं ,, | வெள்ளைரோஜா பூ |
| १५. | पत्नीनां परदेवनायै नमः | हरितचंपकपुष्पं ,, | பச்சை ஸம்பங்கி பூ |
| १६. | सौमङ्गल्यप्रदाय नमः | पीतकुब्जकपुष्पं ,, | மஞ்சள் ரோஜாப் பூ |
| १७. | धर्मपत्नी सायुज्यदायकाय न | मनोरंजितपुष्पं ,, | மனோரஞ்சிதம் |
| १८. | शंकरादपि विष्णोर्वा विशेषतः पूजनीयाय नमः | जपापुष्पं ,, | செம்பரத்தைப் பூ |
| १९. | नवप्रकार भक्तिज्ञाय नमः | पारिजातपुष्पं ,, | பவழமல்லிப் பூ |
| १०. | देवभक्तिपरायणाय नमः | पुन्नागपुष्पं ,, | பின்னைப் பூ |
| २१. | नयनानन्द सन्दोहाय नमः | मृदुचंपकं वा हिमांबुपुष्पं | பன்னீர்ப் பூ |
| २२. | आसेचनकदर्शनाय नमः | वकुलपुष्पं समर्पयामि | மகிழம் பூ |

| नं. | नामावलिः | पुष्पनामानि | | द्राविडनामानि |
|---|---|---|---|---|
| २३. | वित्ताकर्षप्रवीणाय नमः | दाडिमीपुष्पं | ,, | மாதளம் பூ |
| २४. | अतीवप्रियदर्शनाय नमः | कुन्दपुष्पं | ,, | குருந்தம் பூ |
| २५. | ऐहिकामुष्मिकसुखसाधकाय नमः | सुगन्धराजपुष्पं | ,, | நில ஸம்பங்கி பூ |
| २६. | अर्धशरीरत्नाय नमः | बकपुष्पं | ,, | கொக்குமந்தாரைப் பூ |
| २७. | तेजस्विने नमः | शिरीषपुष्पं | ,, | வாகை புஷ்பம் |
| २८. | परम प्रेमास्पदाय नमः | कोकिलपुष्पं | ,, | ஊதாப் பூ |
| २९. | जीवनसाधनाय नमः | नन्द्यावर्तपुष्पं | ,, | நந்தியாவட்டைப் பூ |
| ३०. | इष्टाय नमः | कनकांबरीपुष्पं | ,, | கனகாம்பரப் பூ |
| ३१. | विद्यानिधये नमः | शङ्खपुष्पं | ,, | சங்க புஷ்பம் |
| ३२. | वन्द्याय नमः | रक्तमन्दारपुष्पं | ,, | செந்தாமரைப் பூ |
| ३३. | वीतरागाय नमः | करवीरपुष्पं | ,, | கஸ்தூரிபட்டை |
| ३४. | विनीतिमते नमः | नीलोत्पलपुष्पं | ,, | கருநெய்தற் பூ |
| ३५. | वरेण्याय नमः | बिल्वपुष्पं | ,, | வில்வ புஷ்பம் |
| ३६. | वरदाय नमः | कुसुम्भपुष्पं | ,, | குஸும்ப புஷ்பம் |
| ३७. | वीराय नमः | द्रोणपुष्पं | ,, | தும்பைப் பூ |
| ३८. | वदान्याय नमः | रुद्राक्षपुष्पं | ,, | வாடாமல்லி பூ |
| ३९. | विबुधोत्तमाय नमः | किंकिरातपुष्पं | ,, | வாடாகுருஞ்சி பூ |

| नं. | नामावलिः | पुष्पनामानि | | द्राविडनामानि |
|---|---|---|---|---|
| ४०. | वेदवेदाङ्गशास्त्रज्ञाय नमः | पलाशपुष्पं वा किंशुकपुष्पं समर्पयामि | | முருக்கம் பூ or பலாச பூ |
| ४१. | धर्माचरणतत्पराय नमः | चारुकेसरपुष्पं | ,, | பெரிய சாமந்தி பூ |
| ४२. | आचार्य भक्तिभरिताय नमः | कल्हार (सौगन्धिक) पुष्पं | ,, | செங்கழுநீர் பூ |
| ४३. | अग्निहोत्रपरायणाय नमः | श्वेतकरवीरपुष्पं | ,, | வெள்ளை அரளி பூ |
| ४४. | सत्वाग्निवासाय नमः | नारङ्गपुष्पं | ,, | கிச்சலிப் பூ |
| ४५. | सत्कर्मनिरताय नमः | अतिमुक्तपुष्पं | ,, | குருக்கத்தி பூ |
| ४६. | संशितव्रताय नमः | रात्रिपुष्पं | ,, | ராத்திரி பூ (Lady of the Night) |
| ४७. | सिंहसंहननाय नमः | कदम्बपुष्पं | ,, | கதம்ப புஷ்பம் |
| ४८. | धन्याय नमः | वेतसीपुष्पं | ,, | நீர்வஞ்சி பூ |
| ४९. | वराय नमः | अतसीपुष्पं | ,, | காசாம் பூ or காகரட்டம் பூ |
| ५०. | तथ्याय नमः | कुमुदपुष्पं | ,, | அல்லி பூ |
| ५१. | पुरुष्टुताय नमः | देववल्लभपुष्पं | ,, | ஸுரபின்னை பூ |
| ५२. | तितिक्षवे नमः | सन्ध्यारागपुष्पं | ,, | அந்தி மல்லி or பத்ராக்ஷி |
| ५३. | प्राणदाय नमः | सिंधुवारपुष्पं | ,, | நொச்சிப் பூ |
| ५४. | प्राज्ञाय नमः | मण्डूकपुष्पं | ,, | துலுக்கு சாமந்தி பூ |

| सं. नामावलिः | पुष्पनामानि | | द्राविडनामानि |
|---|---|---|---|
| ५५. प्रसन्नाय नमः | चन्द्रकान्तपुष्पं | स-मि. | சந்திரகாந்த பூ |
| ५६. प्रभवे नमः | लोध्रपुष्पं | ,, | வெள்ளலத்திப் பூ |
| ५७. अमृताय नमः | लवंगपुष्पं | ,, | லவங்க பூ |
| ५८. अलंकारप्रियाय नमः | सूर्यकान्तपुष्पं | ,, | ஸூர்யகாந்த பூ |
| ५९. भर्त्रे नमः | अशोकपुष्प | | அசோக பூ |
| ६०. तारकाय नमः | अर्जुनपुष्पं | | பூமருது பூ |
| ६१. निर्मलाय नमः | सालपुष्पं | ,, | வரால பூ |
| ६२. वशिने नमः | रक्तकरवीरपुष्पं | ,, | கஸ்தூரிபட்டை or சிகப்பு அரளி பூ |
| ६३. अक्रूराय नमः | श्वेतचामन्तिकापुष्पं | | வெள்ளை சாமந்தி பூ |
| ६४ विक्रमाय नमः | तर्कारिकापुष्पं | ,, | தழுதலைப் பூ |
| ६५. द्रीताय नमः | रोचनपुष्पं | | முள்ளிலவு பூ |
| ६६. कृतज्ञाय नमः | गजपुष्पं | ,, | ஏழு யிலைப் பாலைப் பூ |
| ६७.. दक्षाय नमः | लाङ्गलिपुष्पं | ,, | கலப்பைக் கிழங்கு பூ |
| ६८. आत्मवते नम | आम्रपुष्पं | | மாம் பூ |
| ६९. क्षमाय नमः | कुटजपुष्प | ,, | காட்டுமல்லிப் பூ |
| ७०. सुरूपाय नमः | काञ्चनारपुष्पं | ,, | சரக்கொன்னை பூ |
| ७१. मेधाविने नमः | माध्याह्निकपुष्पं वा बन्धूकपुष्पं | ,, | ஸிந்தூர பூ |
| ७२. गुणिने नमः | कामलतापुष्पं | ,, | மயிர் மாணிக்கம் பூ |
| ७३. नाथाय नमः | नीलाम्बरीपुष्पं | ,, | நீலகனகாம்பர பூ |
| ७४. गुणप्रियाय नमः | कुरण्ठपुष्पं | ,, | மஞ்சள் ம( |
| ७५. गोब्राह्मणहिताय नमः | वैकुण्ठपुष्पं | ,, | பேமருத்திப் பூ |

| नं. | नामावलिः | पुष्पनामानि | | द्राविडनामानि |
|---|---|---|---|---|
| ७६. | गोप्त्रे नमः | शेफालीपुष्पं | स-मि | கருநொச்சிப் பூ |
| ७७. | गोविन्दभजनप्रियाय नमः | किङ्किरातपुष्पं | ,, | வாடாகுருஞ்சி பூ |
| ७८. | मन्तव्याय नमः | सुरङ्गपुष्पं | ,, | ஸுரங்கி புஷ்பம் |
| ७९. | मदनाय नमः | कुङ्कुमपुष्पं | ,, | குங்கும பூ |
| ८०. | मान्याय नमः | खदिरपुष्पं | ,, | கருங்காலி பூ |
| ८१. | मनोज्ञाय नमः | सुरूपापुष्पं | ,, | ஏருமல்லி பூ |
| ८२ | महाशयाय नमः | चक्रपुष्पं | ,, | சரகுலி பூ |
| ८३. | सिद्धाय नमः | कोकनदपुष्पं | ,, | செவ்வல்லி பூ |
| ८४. | प्रसिद्धाय नमः | कैरवपुष्पं | ,, | ஆம்பல் புஷ்பம் |
| ८५. | सिद्धार्थाय नमः | कुरवकपुष्पं | ,, | சிகப்பு மருதாணிப் பூ |
| ८६. | शुद्धाय नमः | पीतकरवीरपुष्पं | ,, | மஞ்சள் அரளிப் பூ |
| ८७. | आढ्याय नमः | नागकेसरपुष्पं | ,, | சிருநாகப் பூ |
| ८८. | बहुश्रुताय नमः | नीलपुष्पं | ,, | ஆளிப் பூ |
| ८९. | तपस्विने नमः | ऋषिपुष्पं | ,, | வ்ருக்ஷி பூ (கோராம் பூ) |
| ९०. | तपनाय नमः | मल्लीपुष्पं | ,, | மல்லிகைப் பூ |
| ९१. | सतीनां परमायै गतये नमः | सूचिमल्लीपुष्पं | ,, | ஊசிமல்லிப் பூ |
| ९२. | देवदेवीप्रियाय नमः | करुणमल्लीपुष्पं | ,, | குண்டுமல்லிப் பூ |
| ९३. | धात्रे नमः | पाटलीपुष्पं | ,, | பாதிரி பூ |
| ९४. | नेत्रे नमः | वनचम्पकपुष्पं | ,, | காட்டுசெம்பகப் பூ |
| ९५. | जपपरायणाय नमः | नागमल्लीपुष्पं | ,, | நாகமல்லிப் பூ |
| ९६. | लक्षणज्ञाय नमः | गिरिमल्लीपुष्पं | ,, | வெட்பாலை பூ |

| नं. | नामावळिः | पुष्पनामानि | | द्राविडनामानि |
|---|---|---|---|---|
| ९७. | गभीराय नमः | वृक्षमल्लीपुष्पं | " | மரமல்லிகைப் பூ |
| ९८. | कलावते नमः | रक्तमल्लिकापुष्पं | " | ரங்கூன் மல்லி பூ |
| ९९. | करुणानिधये नमः | नीलात्पलिनी वा इन्दीवरपुष्पं | " | கருநெய்தல் பூ |
| १००. | ब्रह्मविदे नमः | लतामल्लीपुष्पं | " | தடுக்கு மல்லிப்பூ |
| १०१. | क्षेमकृते नमः | मयूरपुष्पं | " | மஞ்சள்மயில்கொன்னைபூ |
| १०२. | श्रेष्ठाय नमः | अच्छुतपुष्पं | " | நொணை பூ |
| १०३. | पण्डिताय नमः | स्वर्णपट्टिकापुष्पं | " | ஸ்வர்ணபட்டி பூ |
| १०४. | पण्डितप्रियाय नमः | नागलिंगपुष्पं | " | நாகலிங்கப்பூ |
| १०५. | वृद्धोपसेविने नमः | बृहद्बकुलपुष्पं | " | பெரியமொகுடம் பூ |
| १०६. | लक्ष्मीवते नमः | कोकिलाक्षापुष्पं | " | நீர்மல்லி பூ |
| १०७. | दयिताय नमः | रक्तमन्दारपुष्पं | " | சிவப்பு மந்தாரை பூ |
| १०८. | प्राणवल्लभाय नमः | मन्मथबाणपुष्पं | " | சாதானிப் பூ |

पं पतिदेवतायै नमः
श्रीपतिचरणारविंदाभ्यां नमः

सन्ध्यारागसुगंधराजसुरभिंसौगन्धिसारंगकम्
सिन्दूरं शुभसिन्धुवारसुरणीं सिंहास्य सिद्धेश्वरम् ।
सैरेयं सितकुब्जकं सहचरीं सप्तच्छदं सप्तलाम्
सानन्दं सुरपाणिकादि कुसुमान्येतानि च स्वीकुरु॥

विभवेसति रत्नैर्वा सुवर्णपुष्पैः टङ्कादिभिश्च पूजयेत् ।

## अथ पत्रपूजा ॥

| नं. | नामावलिः | पत्रनामानि | | द्रविडनामानि |
|---|---|---|---|---|
| १. | स्वामिने नमः | माचीपत्रं | समर्पयामि | மாசிபத்ரம் |
| २. | गुरवे नमः | मरूवकपत्रं | ,, | மருவம் |
| ३. | हृदयेश्वराय नमः | दमनकपत्रं | ,, | தவனம் |
| ४. | जीवितेशाय नमः | गङ्कपत्रं | ,, | கங்கபத்ரம் |
| ५. | रमणाय नमः | सुगन्धमञ्जरी | ,, | கதிர்பச்சை |
| ६. | धवाय नमः | रुद्रजटापत्रं | ,, | திருநீர்பத்ரம் |
| ७. | प्रियाय नमः | तमालपत्रं | ,, | தமாலபத்ரம் |
| ८. | सुखोत्सवाय नमः | नवाम्रपत्रं | ,, | மாங்கொழுந்து |
| ९. | अमितधात्रे नमः | देवदारुपत्रं | ,, | தேவதாரு இலை |
| १०. | परिणेत्रे नमः | नारङ्गपत्रं | ,, | கிச்சிலி இலை |
| ११. | यजमानाय नमः | मालातृणं | ,, | கர்பூரபன் |
| १२. | नायकाय नमः | कर्पूरवल्लीपत्रं | ,, | கர்பூரவல்லி இலை |
| १३. | पाणिगृहीत्रे नमः | चमकं | ,, | குருவேர் |
| १४. | आनन्ददायकाय नमः | जम्बीरपत्रं | ,, | எலுமிச்சை இலை |
| १५. | वल्लभाय नमः | मधुकर्कटीपत्रं | ,, | பம்பளிமாஸ் இலை |
| १६. | रक्षकाय नमः | वीरणं | ,, | வெட்டிவேர் |

श्रीपतिचरणारविन्दाभ्यां
नानाविधपरिमळपत्रपुष्पाणि समर्पयामि ॥

पुष्पद्वात्रिंशत्पञ्चकम् ॥ (वसंततिलकावृत्तम्)

श्री राजमल्लि गिरिमल्लि लतासुमल्ली
श्रीरङ्गमल्लि नवमल्लि सुनागमल्लीः ।
आस्फोटमल्लि शिवमल्लि सुचन्द्रवल्लीः
नेपालमल्लि च गृहाण सुदीर्घमल्लीः ॥ १ ॥

काश्मीरमल्लि वनमल्लि च वृक्षमल्ली
श्वाङ्कोटमल्लि सुरमल्लि सुभद्रवल्लीः ।
वासन्तिका करुण बर्बर देवमल्लीः
संगृह्यतां विविधमल्लि च सूचिमल्लीः ॥२॥

आर्या ।

भूचम्पं वनचम्पं पीतंचम्पं च रक्तचम्पं च ।
मधुचम्पं सितचम्पं नीलंचम्पं गृहाण बहुचम्पम् ॥

उपेन्द्रवज्रावृत्तम् ॥

सुकर्णिकारं गिरिकर्णिकारं
विकर्णिपुष्पं बहुपर्णिकां च ।
सुसप्तपर्णी च सुवेणिकां च
वर्षामि भो नाथ सुवर्णपुष्पम् ॥ ४ ॥

पञ्चचामरवृत्तम् ॥

किंकिरात कुंकमं कुरण्टकं करञ्जकं
कण्टकीं च कोकनदं केविकां करीरकं

काकमालि कामलता कुमुदिनी कुवेलकं
कण्टह्ला कुवलयं गृहाण करकपुष्पकम् ॥ ५ ॥

अपि च ॥

चामन्तिका चामरचंपकानि
जातीं जपाश्वाब्ज सुकुब्जकानि ।
मन्दारमल्लीश्च मनोहराणि
गृहाण पुष्पाणि मयार्पितानि ॥

आरामजैः पर्वतजैः प्रसूनः
स्थलप्रसूतैः जलसंभवैश्च ।
सद्योविकासैश्च सगंधयुक्तैः
वर्षामि भक्त्या बहुपुष्पवृष्टिम् ॥

पत्येनमः नानाविध पुष्पवृष्टिं च समर्पयामि ।

॥ मुक्तादिरत्नवृष्टिः ॥

बहुशुभसुचरित्रैः पूजयित्वा भवन्तं
अथबहुमणिमिश्रै मौक्तिकैस्त्वां विकीर्य ।
कनककुसुमयुक्तां राजतैश्चापि रम्यां
स विनयमति प्रेम्णा रत्नवृष्टिं ददामि ॥

पत्ये नमः मुक्तादिरत्नवृष्टिं च समर्पयामि ॥

धूपः

वनस्पतिरसोद्भूतो गंधाढ्यो गन्ध उत्तमः ।
आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १ ॥

मुस्ताचन्दनसिल्हसर्जकरसह्रीबेरलामज्जकैः
काश्मीरागुरुगुग्गुलुप्रभृतिभिर्गोसर्पिषा चान्वितैः ।
कल्कं द्वादशषोडशांगमहितं यद्वा दशाङ्गं तथा
पञ्चाङ्गं च षडंगधूपसहितं धूपं प्रभो स्वीकुरु ॥ २ ॥

धूताशेषग्रहादिदोषमनिशं पापौघविध्वंसनं
नासारन्ध्रसुखावहं च परमानन्दप्रदं प्राभवात् ।
धूपं ते परिकल्पयामि विजयानन्ताऽमृताख्यं वरं
देवप्रीतिकरं महापरिमळं प्रेम्णा त्वमङ्गीकुरु ॥ ३ ॥

पत्ये नमः धूपमाघ्रापयामि ॥

---

मन्मथवर्तिः - (ऊदुवत्ति)

मार्जारीहिमवालुकापिशुनकं गोशीर्षकं शिल्पनं
वह्नेःप्रीतिकरं तथांबुपिशिता स्यात्काशिकौ जांगिकम् ।
कल्कं भोगविवर्धितं गुडसितासंमूर्छितं सर्पिषा
युक्तं मन्मथवर्तिरित्यभिहिता स्याद्भोगिनां सर्वदा ॥

## ॥ दीपः ॥

**साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**
**गृहाण मङ्गळं दीपं त्रैलोक्यतिमिरापहम् ॥**

---

### १. धूपदीपप्रकाराः ॥

धूपं गृहीत्वा मतिमान् नासिकाऽधो नियोजयेत् ।
दीपं तु दृष्टि पर्यन्तं दशधा भ्रामयेत् पुरः ॥

### २. धूपदानविधानम् ॥

जयध्वनि मन्त्रमातः स्वाहेति मन्त्रपूर्वकम् ।
संपूज्य घण्टा वामेन वादयन् दक्षिणेन तु ॥

### ३. धूपशब्दनिर्वचनं Definition of the word धूपं ॥

धूताशेष महादोष पूतिगन्धप्रभावतः ।
परमानन्द जननात् धूप इत्यभिधीयते ॥

### ४. धूपद्रव्याणि – The incense articles.

गुग्गुलं च गुरुं कोष्ठं उशीरं घनचन्दनम् ॥
घृतं गुडं च कर्पूरं धूपद्रव्यमिहोच्यते ॥

### ५. धूपद्रव्यवृक्षाः – Trees of Incense Articles.

श्रीचन्दनं च सरलः सालः कालागरुस्तथा ।
उदयः सुरथः कन्दो रक्तविद्रुम एव च ॥
पीतसालः परिमलो विमर्दी कासनस्तथा ।
नमेरुर्देवदारुश्च बिल्वसारोऽथ खादिरः ॥

ज्ञानवैराग्यभक्त्याख्य वर्तित्रययुतं तथा ।
भक्त्या दीपं प्रयच्छामि नाथाय रुचिरात्मने ।
त्राहि मां नरकाद्धोरात् दीपज्योतिर्नमोऽस्तु ते ॥

पत्ये नमः दीपं दर्शयामि ।

धूपदीपानन्तरं आचमनीयं समर्पयामि ।

## ॥ नैवेद्यं ॥

( ततः सामान्य विधिना पुरतो मण्डलं लिखेत् ।
तस्योपरि न्यसेत्पात्रं नैवेद्यं परिपूरितम् ॥ )

पत्युः पुरतो शुद्ध तोयेन प्रोक्ष्य, चतुरश्रमण्डलं कृत्वा रत्नखचित सुवर्ण रजतादि स्थाली, चषक, पंचपात्रादि भाजनानि निक्षिप्य, नैवेद्यं पुरतो निधाय ॥

**भोज्यस्थापन प्रकारः ॥**

शुद्धान्नं मध्यमे भागे माषान्नं चाग्नि गोदरे ।
तिलान्नं दक्षिणे भागे मुद्गान्नं निर्ऋते दिशि ।
क्षीरान्नं पश्चिमे भागे गुळान्नं वायुगोदरे ॥
दध्यन्न मुत्तरे देशे भक्ष्याण्यैशान्य भागके ।
दधिक्षीर घृतादीनि व्यञ्जनानि तदग्रतः ॥

---

संतानः पारिजातश्च हरिचन्दन वल्लभे ।
वृक्षेषु धूपाः सर्वेषां प्रीतिदाः परिकीर्तिताः ॥

**नैवेद्यशब्दनिर्वचनं** Definition of the word Naivedyam.

निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा ।
तद्भक्ष्यार्हं पंचविधं नैवेद्यमिति कथ्यते ॥

शाकादीन् पुरतः स्थाप्य भक्ष्यंभोज्यं च कामतः ।
अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृत पायसम् ॥
पुरस्ताद्विमलं पात्रं सुविस्तीर्णं मनोरमम् ।
तत्रभक्तं परिन्यस्तं मध्यभागे सुसंयुतम् ॥
स्थापयेद्दक्षिणे पार्श्वे भुंजानस्य यथाक्रमम् ।
प्रलेह्याद्याः द्रवास्सर्वे पानीयं पानकं पयः ॥
चोष्यं संधानकं लेह्यं सव्यपार्श्वे निधापयेत् ।
पुरतः स्थापयेत् भोक्तुः द्वयोः पङ्क्त्योश्च मध्यतः ॥ (पाकराजेश्वरे)
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूदः सूपोदनं दद्यात् प्रलेह्यांश्च सुसंस्कृतम् ॥
फलानि सर्वभक्ष्यांश्च परिशुष्कानि यानि च ।
तानि दक्षिण पार्श्वे तु भुंजानः सोपकल्पयेत् ॥
सर्वान् गुडविकारांश्च रागषांडव सट्टकान् ॥
*खडान् यूषांश्च पेयांश्च सव्यपार्श्वे प्रदापयेत् ॥

---

**नैवेद्यसमर्पणमहिमा ॥**

नैवेद्येन भवेत्स्वर्गो नैवेद्येनाऽमृतं भवेत् ।
धर्मार्थिकाममोक्षाश्च नैवेद्येषुप्रतिष्ठिताः ।
सर्व यज्ञ फलं नित्यं नैवेद्यं सर्वतुष्टिदम् ॥

**॥ भोजनमण्डपप्रवेशनम् ॥**

पत्नीं विहित शृङ्गारां प्राप्य भोजनमण्डपम् ।
यथाचाग्नि बलं वीक्ष्य कुर्यात् भोजनकं नरः ॥

Begin eating with sweet and finish with sweet.

मधुरेण समारभ्य मधुरेण समापयेत् ॥

* खडान् - Butter milk boiled with acid vegitables and spices மோர் குழம்பு.

भक्ष्यं भोज्यं च संपूर्णं नाना संभार संयुतम् ॥
खण्डखाद्यान्यनेकानि खिन्नपक्कांश्च पिष्टकान् ।
अन्यान्यन्यानि मेध्यांश्च घृतपूरांश्च खाण्डवान् ॥
मधुरान् सर्जितान् पूपानन्नं मृष्टं सुपाकिकम् ।
प्रीत्यर्थं सर्वसत्वानां दीयते च पुनः पुनः ॥

(ब्रह्मपुराणे अ. ४९ पु. १४२)

श्रीकृष्ण उवाच—

मोदकान् गुडसंपूर्णान् घृतपूरकमण्डकान् ।
पोहाळिकादिकंसारं सर्वा स्सक्तव एव च ॥
वटकं पायसं दुग्धं शालिदध्योदनं तथा ।
इङ्गिकान् स्फूर्जिकान् पार्थ अपूपान् गुडलड्डुकान् ॥
तिलपिष्टं माषपिष्टं शालिपिष्टं स शर्करम् ।
भक्त्या देयानि सर्वाणि प्रीत्यर्थं परितुष्टयेत् ॥

॥ नैवेद्य श्लोकः ॥

## अन्नं चतुर्विधं स्वादु रसैष्षड्भिस्समन्वितं ।
## भक्ष्यभोज्यफलोपेतं नैवेद्यं प्रतिगृह्यतां ॥

---

**अन्नवर्णनं** – Description of the best kind of boiled rice.

सद्यः शालेयमन्नं शशिकर निकर प्रोज्वलं सिद्धसारं
आम्यद्बाष्पच्छलेनत्रिदशपुरसुधाधेयमाधुर्यधुर्यम् ।
अन्योन्यं नैवलग्नं परिमल भरितागारवेदीनिभागं
संप्राप्नोति प्रसन्नः प्रथम परिबृढो यस्य पुंसस्सदास्या ॥

Description of the beauty of the best prepared Rice.

कोष्णं पंकज चक्षुषःस्तन इव स्वच्छं शरच्चन्द्रमा
रोचिर्वन्मिलितंमिथोनच यथाचाण्डं स पत्नीजनः ।

तस्मिं स्तुष्टिः परो धर्मः तस्यवैपरिचर्यया ।
तोषमायाति सर्वात्मा परमात्मा जनार्दनः ॥



शाल्यन्नसूपदधि दुग्ध सिताघृतानि स व्यंजनानि परमान्नसुपिष्टकानि ।
शाकानि दालिचणकाढकसंयुतानि सौवर्ण पात्रनिहितानि गृहाणतानि ॥

### भोज्याष्टकम् ( बसन्ततिलकावृत्तम् )

शाल्यन्नसूपदधिदुग्धसिताघृतानि
सव्यञ्जनानि परमान्नसुपिष्टकानि ।
भोज्यानि यूषक्कथितानि करंभकानि
सौवर्णपात्रनिहितानि च भुङ्क्ष्व तानि ॥ २ ॥

वृन्ताकसूरणपटोलभरित्रकानि
शाकानि दालिचणकाढकसंयुतानि ।
पाकोल्लसन्मरिचजीरकरामठानि
[1]दध्यम्लकं [2]शिखरिणीं च गृहाण तानि ॥ २ ॥

---

सुस्निग्धं तरुणीकपोलवदलं कान्ताङ्गवत्कोमलं
भक्तं भुक्तमनेकदोषशमनं लध्वग्निकृत् बृंहणम् ॥

॥ अन्नजाति Varieties of rices.

आढक्यान्नं हरिद्रान्नं नवान्नं कृसरान्नकं ।
शाकान्नं मधुरान्नं च नानान्नानि प्रकल्पयेत् ॥

**षड्विधान्नानि** – 6 kinds of Rice preparations.

परमान्नं हरिद्रान्नं दध्यन्नं कृशरान्नकम् ।
गुडान्नं चापिमुद्गान्नं इत्यन्नं षड्विधं स्मृतम् ॥

**षड्विधहविः** - 6 kinds of Havis.

पायसं कृसरं गौल्यं मुद्गान्नं च यवोदनम् ।
शुद्धान्नं चैव षड्भेदं कारयेदुक्तमार्गतः ॥

१. कढी । २. श्रीखण्ड वा शिखरण ।

गोदुग्धवातामसितायुतानि
गोधूममुद्गादि सुपायसानि ।
चूष्याणि दध्यादि सुयोजितानि
गृहाणचाम्रादि रसानि तानि ॥ ३ ॥

चित्रान्नचित्रान्नगुडोदनानि
जंबीरनारंग रसोदनानि ।
क्षीरान्न मुद्गान्न फलोदनानि
गृहाण माषान्नयवोदनानि ॥ ४ ॥

दध्योदनं केसरनिर्मितोदनं
सुनारिकेळाम्रमरीचिकोदनं ।
गोवर्धनान्नं च कदंबकोदनं
गृहाण वार्ताक हरेणुकोदनम् ॥ ५ ॥

॥ यूषसारादीनि ॥

निष्पावमाषसुमकुष्टमसूरयूष
कुल्माषमुद्गचणकाढकदाळिसूपान् ।
धान्याकसर्षपविमिश्रितवेशवार
साराणि स्वादयकुलुत्थविनिर्मितानि ॥ ६ ॥

---

॥ यूषसारादीनि ॥ (आर्या)

कांबलिकं खलयूषं पञ्चमुष्टिकं पञ्चामृतयूषं ।
शूकधान्यकस्यूषं नवांगयूषं वनमुद्गमूलकायूषम् ॥

शाकादीने (शार्दूलविक्रीडितम्)

भेण्डीसूरणशिग्रुतुंबिरुचिरं वार्ताककोशातकी
कूष्माण्डं च सुकारवेल्लपट्टलं शृङ्गाटकंकर्कटीं ।
चाङ्गेरी च सुतण्डुली च लवलीमत्स्याक्षिकुस्तुंभरी
शाकंवास्तुकमारिषादिरचितं चञ्चू तथास्वीकुरु ॥

मूलैः पत्रकरीरकांड कवचैः पुष्पैस्तथापल्लवैः
नानाशाकसुकन्दनालसहितंसुस्वादुसंयोजितं ।

---

Saram the Sara (essence) of Samsara.

सारं भोजनसारं सारं सारङ्ग लोचनाधरतः ।
पिबकिल वारंवारं नोचेत् वृथा भवति संसारः ॥

Improver of Digestion and Remover of Bile.

भोजनाग्रेस्सदापथ्यं लवणार्द्रक भक्षणम् ।
रोचनं दीपनं वह्नि जिह्वा कण्ठ विशोधनम् ॥

दशविधशाकानि – 10 kinds of Vegetables.

मूलपत्रकरीराग्र फलकाण्डादिरूढकाः ।
त्वक्पुष्पं कवचं चेति शाकं दशविधं स्मृतम् ॥

षड्विधशाकानि – 6 kinds of Vegetables.

पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरुविद्याद्यथोत्तरम् ॥

Contemplation to avoid evil eye.

अन्नं ब्रह्मा रसो विष्णुः भोक्तादेवो महेश्वरः ।
इति संचिन्त्य भुंजानो दृष्टिदोषैर्नलिप्यते ॥

धानीपत्र सुमिष्ट निंबरुचिरं नानोपदंशं तथा
नैवेद्यं नवनीतयुक्तमधुरं संगह्य संतुष्यताम् ॥८॥

---

Every mouthful lump to be taken by uttering the name of God Govinda.

कवलेकवलेकुर्वन् गोविन्दस्यानुकीर्तनम् ।
जीवन्मुक्तोऽन्यथा कुर्वन् केवलोदरपूरकः ॥

**षड्रसाः** – 6 kinds of Rasas or Tastes.

कटुस्तिक्तः कषायश्च लवणोम्लस्तु पञ्चमः ।
मधुरेण समायुक्ताः कथिताः षड्रसायनम् ॥

**पञ्चविध आहाराः** – 5 kinds of foods.

भक्ष्यं भोज्यं च लेह्यं च चोष्यं पेयादि पंचकम् ।

**षड्विध आहाराः** – 6 kinds of foods.

आहारं षड्विधं चोष्यं पेयं लेह्यं तथैव च ।
भक्ष्यं भोज्यं तथाचर्व्यं गुरुविद्याद्यथोत्तरम् ॥

The best scientific method of taking food.

कुक्षेरन्नेन भागौ द्वावेकं पानेन पूरयेत् ।
वायोः सञ्चारणार्थञ्च चतुर्थमवशेषयेत् ॥

Satvika food.

उच्छिष्टमवशिष्टं वा पथ्यं पूतमभीप्सितम् ।
भक्तानां भोजनं विष्णो नैवेद्यं सात्विकं मतम् ॥

Rajasa food.

इन्द्रियप्रीतिजननं शुक्रशोणितवर्धनम् ।
भोजनं राजसं शुद्धमायुरारोग्य वर्धनम् ॥

## ॥ भक्ष्यपञ्चकम् ॥

**संपूर्णान् घृतपाचितान् गुडयुतान् पूपालिका मोदकान्**
**द्राक्षागोधुम शर्करादि रचिताः नानाविधालड्डुकाः ।**

---

**सप्तधान्यानि** – 7 kinds of food grains.

यव गोधूम धान्यानि तिलाः कंगुश्च मुद्गकाः ।
श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ॥

**नवधान्यानि** – 9 kinds of food grains, also intended for 9 planets.

गोधूम स्तण्डुलाः खल्वाः मुद्गाश्चणकबर्बराः ।
तिलाः माषाः कुकुल्थाश्च नवधान्यं प्रकीर्तितम् ॥

**सप्तदशधान्यानि** – 17 kinds of food grains.

व्रीहियश्च यवाश्चैव गोधूमाः कंगुकास्तिलाः ।
प्रियंगवः कोविदाराः कोरमाषाः सतीनकाः ॥
माषामुद्गामसूराश्च निष्पावाः सकुकुत्थकाः ।
आढक्यश्चणकाश्चैव यावनाळास्तथास्मृताः ॥
क्रमादेवं विजानीयात् धान्यास्सप्तदशः स्मृताः ॥    (मार्कण्डेयपुराणे)

**अष्टादशधान्यानि** – 18 kinds of food grains.

व्रीहिर्यवास्तिलाश्चैव यावनाळाश्च माठराः ।
सतीनकाः कुळुत्थाश्च कंगुकाः कोरधूपकाः ।
माषा मुद्गामसूराश्च निष्पावाश्यामसर्षपाः ॥
गोधूमा चणकाश्चैव नीवाराढक्य एव च ।
एवं क्रमेण जानीयात् धान्यान्यष्टादश स्मृताः ॥    (स्कान्दपुराणे)

शष्कुल्यादि गुळोरिकाश्च खदिकाः सत्पूरिकाःफेनिकाः
सापूपाःपृथुकाश्चपर्पटयुताः भक्ष्याणि संगृह्यताम् ॥१॥

खाजाः कुण्डलिसट्टकाश्च वटकामाषेड्डिकामण्डकाः
लाजाश्चेन्दुरसाःरसाज्यवटिकाश्चोल्कारिकाःस्फूर्जिकाः।
निष्ठानं बलभद्रिकास्सुचणका मुद्गादिसद्दाळिकाः
कोकुंदं करपाट्टिकादिसकलं प्रीत्या प्रभो स्वीकुरु ॥ २ ॥

कुल्माषं च सुदारपत्रचिपिटं कंसारकं लप्सिकां
संयावं च सुचन्द्रहासकृसरं रागं तथा सेविकां।
अभ्यूषं मधुमस्तकं च शिखरं निष्यंदकं कूपिकां
मौडीं शर्करपालिकादिरुचिरां प्रीत्या त्वमंगीकुरु॥ ३ ॥

चाणक्याश्चिरमण्ठवेष्टनियुतं कर्पूरसम्नालिकां
संधानं च सु मल्लपूपमधुरं सद्राष्टजंखांडवं।
सक्तुंचन्द्रकलां निकोचकयुतां सन्माषरंगीं तथा
नानापिष्टसुमृष्टपिष्टकमिदं प्रीत्या प्रभो स्वीकुरु॥ ४ ॥

मिष्टंभ्राष्टजपिष्टपूरकमिदंहृष्टिप्रदांपिष्टिकां
स्थालीपिष्टमकुष्टपिष्टरचितंविष्टंभपिष्टोदकं।
मिष्टान्नं च सुमुष्टिकादिसहितंपात्राष्टकेस्थापितं
नानापौष्टिकजुष्टपिष्टकमिदंसंतुष्टयेकल्पताम् ॥ ५ ॥

(अवकाशेसति पठनीया:)

## ॥ खाद्याष्टकम् ॥

(अनुष्टुप्)

पूपाली पूलिकापूली पूपली क्षीरपूलिका ।
पूपिकापूप पूरी च दधिपूपं च गृह्यताम् ॥ १ ॥

चित्रापूपं शालिपूपं पिष्टिकां चाम्लपोळिकां ।
गृहाणांगारकीं चैव आम्लवैदळ पूरिकाम् ॥ २ ॥

॥ आर्या ॥

सौवर्णपात्रयुक्तं मोहनभोगं च रत्नमोदकं मधुरं ।
माणिक्य कदळिपूपं राजत पत्रफेनिकामधुरम् ॥ ३ ॥

मुक्तामोदकमधुरं बीजक काजूतविन्दुलड्डुकं मधुरं ।
दधिमोदक तापहरी दुग्धाम्रं दुग्धकूपिका मधुरम् ॥

पालालासुरसाला सकलाटावैदळा पललं ।
तिलमोदकद्विदलान्नं मुद्गदळं साल्लूकलड्डुकं सरलम् ॥

वठकं चिपिटं वाटिकां चिर्भट कार्कोट कर्कटी वटिकां ।
चर्पटपर्पटसकटं स्वीकुरु साकूटपाट्टिकांपिटकम् ॥ ६ ॥

(पञ्चचामरवृत्तम्)

ईडरीं च खांडवं च बोंडकं च मण्डकं
कुण्डलीं च खण्डखाद्य वाद्यमण्ड सिंहकं ।

सट्टकं च सोमसट्टकं प्रमोदसट्टकं
गृहाणमुद्गपर्पटादि वर्धमान सट्टकम् ॥ ७ ॥

खाजिकां च वेढ्मिकां च गौळिकां च घार्निकां
मार्जिकां च कूर्जिकां च कांजिकां च रोटिकां।
सेमिकां च मेडिकां च जीरकादि पूरिकां
स्वीकुरुष्व माषगर्भमिष्ट तन्तुफेनिकाम् ॥८॥

॥ संप्रकीर्णरुचिकर नैवेद्यनवरत्नम् ॥

॥ घृतश्लोकः ॥

गव्यं स्नेहवरं घृतं गुरु हिमं वृष्यं सुराणां प्रियं
मेध्यं नेत्रहितं विपाकमधुरं माङ्गल्यमारोग्यदं।
ओजः पुष्टिकरं रसायनवरं बल्यं वपुःस्थैर्यदं
तेजःकान्तिविवर्धनं स्मृतिकरं रुच्यं प्रभो गृह्यताम् ॥

॥ क्षीरश्लोकः ॥

गोदुग्धं मधुरं रसायनवरं सत्पौष्टिकं जीवनं
सद्यः शुक्रकरं च मेध्यममलं स्निग्धं च हृद्यं तथा।

॥ क्षीरगुणानि ॥

दुग्धं तु मधुरं स्निग्धं सद्यः शुक्रकरं मतम्।
पौष्टिकं च सरंशीतं सर्वेषां च हितावहम् ॥
बलप्रदं जीवनं च धातुवृद्धिकरं मतम्।
वयसः स्थापनं चैव वाजीकरण मुत्तमम् ॥

रुच्यं पथ्यतमं गुरुप्रियतमं कृच्छ्रघ्नपित्तघ्नकं
वातामादिनिकोच केसरयुतं प्रीत्या प्रभो पीयताम् ॥४॥

॥ दधिश्लोकः ॥

दधि पञ्चविधं शुभ्रं मंदं स्वादु सुखावहं ।
स्वाद्वम्लमम्लं चात्यम्लं बल्यं स्वीकुरुनायक ॥३॥

---

रसायनं कान्तिकरं क्षुधिते बाल्वृद्धयोः ।
अतिव्यपाये क्षीणे च क्षतक्षीणे हितावहम् ॥

पीयूषं - Well boiled thiok rich milk.
किञ्चं - Khova.
शिलाटं - A kind of Khova.
सन्तानिका - Malai (मलाइ) or the milk cream.
नवनीतं - Butter.
क्षीरशाकं - Non-boiled broken milk.
मोरटं - The water of broken milk.
सरं - The cream of curds.
मस्तु - The thin water of curds.
दधि - Curds.
तक्रं - Butter-milk.

॥ दधि ॥

तत दुग्धोद्भवं प्रोक्तं दधिस्निग्धं रुचिप्रदम् ।
सर्वधातु बलाग्नीनां वर्धकं च गुणोत्तमम् ॥

गव्यं दुग्धतमं बल्यं पाकेस्वादु रुचिप्रदम् ।
दीपनं पौष्टिकं ग्राहि शीतलं वातनाशनम् ॥

॥ तक्रश्लोकः ॥

जंबीर जीरकैर्युक्तं हिंगूलवणमिश्रितं ।
धान्याकपत्रसंयुक्तंमिष्टनिंब विमिश्रितं ।
पित्तघ्नं दीपनं शीतं तक्रं चूषय नायक ॥४॥

॥ नवनीत श्लोकः ॥

नवनीतं हितं गव्यं बृष्यं वर्णबलाग्निकृत् ।
संग्राहि वातपित्तास्र क्षयार्शोर्दित कासजित् ॥

तद्बाले सुहितं वृद्धे विशेषादमृतं शिशोः ।
वीर्यसंवर्धनं यूनां नवनीतं च गृह्यताम् ॥५॥

---

दधि पंचविधंप्रोक्तं मंदं स्वादु सुभाषिते ।
स्वाद्वम्लमम्लं चात्यम्लं शरच्चन्द्र निभानने ॥

5 kinds of curds.

१. मंदं २. स्वादु ३. स्वाद्वम्ल ४. अम्ल ५. अत्यम्ल.

॥ तक्रम् ॥

घोलं मवित मुदश्वित्तक्रमाहुश्चतुर्विधम् ।
सरसं निर्जलं घोलं मथितं रसवर्जितम् ॥
तक्रं पादजलोपेतमुदश्वित्वर्ध जीवनम् ।
केचित्तुछच्छिकां प्राहुः बहुनीरांहि पंचमीं ॥

5 kinds of Butter milk.

१. घोलं २. मथितं ३. उदश्वित् ४. तक्रं ५. छच्छिका.

॥ उपदंशश्लोकः ॥

लिम्पाकं लिकुचार्द्रकं च लवली चूतं च रायामलं
धात्रीवेत्रफलं कपित्थबदरं पप्पायिधाराफलं ।
आम्रातं करमर्दिकां च करुणं चार्द्रमरीचाद्युतं
प्रीत्या स्वादय सैन्धवादि रुचितं नानोपदंशं प्रभो ॥

॥ मधुरलेह्यादि (मुरबा) श्लोकः ॥

कूष्माण्डं कदळी कपित्थ बदरं द्राक्षा तथा चंदनं
धात्रीचार्द्रक वेणु चूत लिकुचं चौदुंबरं दाडिमं ।
तूतं चेक्षु हरीतकीं च परुषं सन्मातुलुङ्गादिकं
नानासंस्कृतमिष्ट संधितफलं लेह्यानि भो स्वीकुरु ॥

---

॥ गुणाः ॥

वातपित्तहरं घोलं मथितं कफपित्तनुत् ।
तक्रं त्रिदोष शमनं उदश्वित् कफकारकम् ॥

छच्छिका श्रमपित्तघ्नी शीतातृड्वात नाशिनी ।
गुर्वीश्लेष्म प्रदाप्रोक्ता दीपनी लवणान्विता ॥

तक्रं ग्राहि कषायाम्लं स्वादुपाके रसेलघु ।
वीर्योष्णं दीपनंप्रोक्तं पौष्टिकं वातनाशनम् ॥

ग्रहण्यादिकरोगेषु तक्रं पथ्यतमं मतम् ।
वातेम्लसैन्धवोपेतं पित्ते स्वादु सशर्करम् ॥

सुरुच्यं पुष्टिदं बल्यं वस्तिशूलहरं मतम् ।
पिबेत्तक्रं कफेरूक्षं व्योष क्षारसमन्वितम् ॥

॥ मधुर पेयश्लोकः ॥

द्राक्षादाडिम मातुलुंगसुफलैः सुस्वादनन्नासकैः
नारंगैश्च परूषकैश्च बदरैः पद्मैश्च कुब्जैस्सुमैः ।
मिष्टं केसरशर्करादि रचितं हृद्यं तथा शीतलं
भक्त्यानाथ सुसंस्कृतं फलरसः प्रीत्याप्रभो पीयताम् ॥

॥ पानीय श्लोकः ॥

पटपूतं नवं शुद्धं पाटली पुष्पवासितं ।
गारुत्मताश्म खचित स्वर्णपात्रस्थितं वरं ।
गंगादितीर्थमानीतं सलिलं पीयतां प्रभो ॥९॥

॥ तृप्तिप्रदायक विज्ञप्ति श्लोकः ॥

भक्ष्यैर्भोज्यैर्लेह्यचूष्यैश्च पेयै
रन्नैर्नानाव्यञ्जनैस्सोपदंशैः ।
शाकैः सूपैः पायसैः साधुमृष्टैः
दध्ना क्षीरेणाज्य स स्तोषयामि ॥

(अवकाशेसति पठनीयाः) भक्षण नवरत्नमालिका ॥

(भाषानामयुता - शार्दूलविक्रीडितम्)

मेवाटी मटकी त्रिकोणमठडी पूरी कचोरी तथा
बाटी सूतरफेणि लाड्डु सुकली बून्दी च सोजी पुरी ।

---

मूत्र कृच्छ्रेतु सगुडं पांडुरोगे सचित्रकम् ।
हिंगु जीरयुतं घोलं सैन्धवेनापि धूपितम् ॥

पाटीचूर कपूरनारि टिपरी घारी सुजीरापुरी
रोटी आमटि तूतरी च शिखरी कंसार अंगाखरी ॥ १ ॥

बासुन्दी च मलायि केसरपुरी श्रीखण्ड द्राक्षापुरी
बादंपूरि रसालपूरि फरशीपूरी च रंभापुरी ।
आलूपूरि खापुरी रसपुरी पंजीरि बर्मापुरी
इम्मर्ती च सु दूधपूरि चकरी संगृह्यतामङ्कुरी ॥ २ ॥

माण्डा कान्तिवडा च सूरणवडा बोण्डा च मेथीवडा
पूडा खीरवडा मसालसुवडा आलूवडा दीवडा ।
मैसूरामवडा मरी दहिवडा भेण्डा पकोडा अडा
खर्मण्डा इदडा वडा च टिकडा माखण्वडा चेवडा ॥३॥

पिस्ता बादम नागरंग बरफी शीरा जिलेबी कढी
मोतीचूर मनोर खीर रबडी कूष्माण्ड लाजावडी ।
मीठीदूधवडी तथा सुखिचडी कोठादि मीठीकढी
घेबर बाबर ठोर ढेबर तवापूरी खाखीचड्डी ॥ ४ ॥

बर्फी रेवडि पापडी दहिवडी पेण्डा पकोडी वडी
पाटोडी च लवंगलाडि थपडी तल्पापडी तल्वडी ।
कुर्मापापड गोळपापडि तथा चोळावडी काकडी
बीडी डेरवडी पोडी कुरवडी संगृह्यतां सूखडी ॥ ५ ॥

खाटाशाक चणा मटर् चपटिया छूटासुचुर्माकुटा
फर्फटिया मेथुकूट कूट्टु गठिया टेटा बटाटा खटा ।
उफ्रेटा च परामटा च मठिया साटा चिरोटा मठा
चोरीठा मठ शेवगाण्ठ मुठिया पेठा च कोठा मिठा ॥

पण्डोळी तलसांकळी सु चकली थूली सुवांळी गळी
सोमाशी च सुलापशी च पपची चट्णी तथा काचली ।
रसगुल्ला सुगुलाबजाम कतली चोळाफळी ढोकळी
गुंजा मोहनथाळ शेव भजिया भक्ष्याणि च स्वीकुरु ॥

खारीशेव सुखाखरी च खिरणी रंभासुखी खाजली
खाटी खारि खरी सुपोळि खोपरागोळीतथा खाण्डवी ।
खुर्गुंजा खुरफी खजूरखुरमा खाजा खमण्ढोकळा
खस्खस्लाडु खुवा मनोहर सखे खाद्यानि च स्वीकुरु ॥

मेवा मालपुवा बदामहलवा मावापुरी पाटवा
गोवापायस मन्मनोर हलवा मैसूर्पाक् सातवा ।
फेणी चन्द्रकला गुलाबलडुवा नाळामृतो हाण्डवा
गुल्गुल्याच गुलाब सोनहलवा गुप्चुप् च संगृह्यतां ॥

॥ फलानि ॥

(शरावादि आधारपात्रेषु बहुविधपक्कफलानि निक्षिप्य, चमसानि दत्वा, फलान्यपि समर्पयेत् ॥)

## फलाष्टकम्

राजाम्रं मधुरं च राजबदरं राजादनं श्रीफलं
रम्यं रामफलं च राजकदळी सीताफलं सत्फलं ।
भव्यं सेवफलं सुमारुतिफलं द्राक्षा च लक्ष्मीफलं
कृष्णं नागफलं सितं च यमुना जंबूफलं गृह्यताम् ॥

नारंगं मृदुनारिकेल सुफलं गोपालकर्कटिकी
[1]षड्भूजं लकुचं च दाडिमफलं माणिक्यरंभाफलं ।
खर्जूरं पनसं परूषक मनन्नासं च बिल्वं फलं
मध्वौदुंबर मिक्षुखंडममृतं नानाफलं गृह्यताम् ॥ २ ॥

तक्कोलं मधुकर्कटी च वकुलं पप्पायि तूतं फलं
[2]अञ्जीरं मधुकुक्कुटं च मधुरं पारेवतं पीलुकं ।
श्लेष्मातं मधुमातुलुंगकफलं दीप्या प्रियालं फलं
मंगुस्तानफलं च तोरणफलं सर्वफलं गृह्यताम् ॥ ३ ॥

धात्रीवेत्रफलं सुलकुचफलं गांधारमादीफलं
पक्कं चित्रफलं तरंबुज गुडं बिंबं मधूकं फलं ।
काजूतं करमर्दिका च कमलं कालिंग कर्काटकी
काछंगं करकं कपित्थ करुणं कोकं फलं गृह्यताम् ॥

---

१. कर्भूजा २. अञ्जीरं See page 112.

धारा पूपफलं च भूमिपनसं चोर्वारुकं पेरुकं
वीणाकर्कटि नारिकेळफलजं चार्द्रं सुवातामकं ।
रुच्यंकैतल माम्लवेतसफलं हारीतमोचाफलं
पथ्यं पाचन रोचनं बलकरं नानाफलं गृह्यताम् ॥ ५ ॥

॥ नानाम्रफलानि ॥

सिंदूराम्रफलं सिताम्र मधुरं रक्ताम्र नीलाम्रकं
स्थूलाम्रं स्मर कोकिलाम्र रुचिरं क्षुद्राम्र मध्वाम्रकं ।
वातामाम्र लता रसाम्र सुमहाराजाम्र कोशाम्रकं
नानाम्रं सितजाम्रकादि सुफलं सर्वाम्र मंगीकुरु ॥६॥

॥ नानाद्राक्षाफलानि - नानाजम्बूफलानि - नानाकदलीफलानि च ॥

हारीता कापिला सुवृत्त मधुरा काश्मीरिका गोस्तनी
निर्बीजा रुचिरा च गुच्छसुफला द्राक्षामयाचार्पिता ।
भूजंबू भ्रमरेष्टिकादि च महादीर्घं सु जंबूफलं
एला चंपक पर्वतादि कदली सर्वंफलं गृह्यताम् ॥७॥

बदरीफलानि (आर्या)

श्रीबदरी क्षितिबदरी वल्लीबदरी च बदरिवल्ली च ।
बहुफलिका लघुबदरी नानाबदरी च गृह्यतां नाथ ॥

---

निषिद्धफलानि

हिंतालं च विलिंविगलगलफलं पीचं च लीचीफलं
मांमं चामगुलं च प्लं च मधुरं वाल्नट्करन्ट्चेप्रिकाट् ।

॥ शुष्कफलानि ॥

नेवोपमफलं मिष्टं खण्डशर्करया युतं ।
आक्षोटकं प्रियालं च शुष्कमंजीरकं नवम् ॥

काजूतकं चारुकं च चल्गोजा च निकोचकं ।
द्राक्षा कृष्णा च निर्बीजा रक्ताभूशिंबिका तथा ॥

मृदुला गोस्तनाकारा खर्जूरी त्रिविधापि च ।
शृंगाटकं मखान्नं च पनसं पद्मबीजकम् ॥

कूष्माण्ड कर्कटीबीजं शुष्कं च कदळीफलं ।
नानाशुष्कफलादीनि काण्डजं चापि गर्भकम् ॥

नानासंस्कृतबीजानि देहपुष्टि प्रदानिवै ।
समर्पितानि भक्त्या त्वं गृहाण फलदायक ॥

॥ मधुरश्लोकविज्ञप्तिः ॥

मधुपूपक मधुमस्तक मधुयुत मध्वाम्रं मधुरं
मधुजामिश्रित मधुवल्लीयुत मधुलड्डुकं मधुरम् ।

मधुमज्जा मधुनारिकेळयुत मधुमोदक मधुरं
मधुरप्रिय मम स्वीकुरु मधुमय नैवेद्यं मधुरम् ॥

---

गोडुंबं च सुकुट्टु दुर्रूकफलं लोकाट्गिनी पेरूकं
बेरीरासोबेरी चरी च बदरी स्ट्राचेरी संगृह्यताम् ॥

मधुरा मधुकर्कटी मधुरफल मधुरबीजपूरं
मधुरस्तव मधुराम्लक मधुरस मधुजंबीरफलं।
मधुपाका मधुकुक्कुट मधुफल मधुबीजं च फलं
मधुरप्रिय मम स्वीकुरु मधुमय नैवेद्यं मधुरम् ॥

मधुमधुरं क्षीरं मधुरं द्राक्षा मधुरा सितापि मधुरैव
मधुरादपि मधुरतरं मथुरानाथस्य नाम यद्गीतम् ।
पतिमुखमतिशय मधुरं तत्पादांभोज पूजनं मधुरं
मधुरतरातत्प्रीतिः तद्गुणगणसंकीर्तनं मधुरतरम् ॥

नैवेद्यं प्रोक्ष्य परिषिच्य ।

सुधादेव्यै च विद्महे । सर्वसिध्यै च धीमहि । तन्न-स्तुष्टिः प्रचोदयात् । इति सुधागायत्र्या नैवेद्यं अमृती कृत्य ॥

आपोशनम्

एलोशीरलवंगादि कर्पूर परिवासितं ।
ददाम्यापोशनं तुभ्य मुपस्तरण साधनं ॥
अमृतमस्तु—पत्येनमः आपोशनं समर्पयामि ॥

प्राणाहुतयः

प्राणात्मने नमः उदानात्मने नमः
अपानात्मने नमः समानात्मने नमः ॥
व्यानात्मने नमः

*पत्येनमः महानैवेद्यं समर्पयामि ।
नानाविधभक्ष्याणि समर्पयामि ।
बहुविध भक्ष्य भोज्य लेह्य चूष्य पेयादीनि समर्पयामि ।
नानाविधफलानि समर्पयामि ।
शुष्कफलान्यपि समर्पयामि ।
गर्भकबीजादीनि समर्पयामि ।
नानाविध नैवेद्यानि समर्पयामि ।

---

प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । समानाय स्वाहा।

*श्रियःपतये नमः ।

जगत्पतये नमः ।

रुक्मिणी सत्यभामासमेत श्रीवेणुगोपालस्वामिने नमः ।

श्रीभूमि नीळा देवीसमेत श्रीमहाविष्णवे नमः ।

श्रीलक्ष्मी नारायणाय नमः ।

श्रीपार्वती परमेश्वराय नमः ।

श्रीरामचन्द्र परब्रह्मणे नमः

सीता लक्ष्मण भरतशत्रुघ्न हनुमत्समेत श्रीरामचन्द्रस्वामिने नमः ।

श्रीमहा गणपतये नमः ।

छाया सौम्या देवीसमेत श्रीसूर्यनारायण स्वामिने नमः ।

राधा रुक्मिणी समेत श्रीकृष्णपरमात्मने नमः ।

इत्यादि वाक्यानि भगवद्विषयेष्वपि नैवेद्य समर्पणकाले संयोजितव्यानि ॥

## ॥ पानीयम् ॥

स्वच्छं सज्जन चित्तवल्लघुतरं दीनार्थिवच्छीतलं
पुत्रालिङ्गनव त्तथैव मधुरं बालस्य संजल्पवत् ।
एलोशीर सुचन्द्र केसर युतं कुब्जांबु भिर्वासितं
शीतं पाटलकेतकैस्सुरभितं पानीयमापीयताम् ॥
पत्येनमः मध्येमध्ये घुमघुमवासित पानीयं समर्पयामि
इति रत्नखचित सुवर्णकलशादि पात्रेषु पानीयजलं दद्यात् ॥

---

See page 107.

आम्रानाम्रातकान्कुल्लान्नारिकेलान्सतिन्दुकान् ।
मुंजातकांस्तथाञ्जीरान्दाडिमाम्बीजपूरकान् ॥
महाभारते वनपर्वणि अ. ६१. श्लो. ४६. (कुम्भकोणावृति)

---

## ॥ भोजनस्य मध्ये मध्ये पानीयस्यावश्यकता ॥

अत्यंबुपानान्नविपच्यतेन्नं निरंबुपानाच्च स एव दोषः ।
तस्मान्नरोवह्नि विवर्धनाय मुहुर्मुहुर्वारि पिबेच्च भूरि ॥

## ॥ पानीयग्रहणप्रमाणम् ॥

कुक्षेरन्नेन भागौ द्वावेकं पानेन पूरयेत् ।
वायोस्सञ्चरणार्थञ्च चतुर्थमवशेषयेत् ॥

## ॥ जलपात्रम् ॥

जलपात्रं सुवर्णस्य तदभावे तु रौप्यकं ।
तदभावे च ताम्रस्य तदभावे तु पैत्तलम् ॥
पवित्रं शीतलं पात्रं वैडूर्य स्फटिकोद्भवं ।
तद्वत्काच भवं प्रोक्तं सर्वाभावे तु मृण्मयम् ॥

॥ उत्तरापोशनम् ॥

उत्तरापोशनं नाथ अमृतस्यापिधानकं ।
गृहाण वेदशास्त्रोक्त धर्माचरणतत्पर ॥

पत्ये नमः उत्तरापोशनं समर्पयामि ।

॥ करोद्धर्तनम् ॥

प्राणेश हर्षपूर्ण श्रीगन्धेनकरपल्लवं ।
समुद्धर्त्य मुखंपादौ क्षाळयोष्णेन वारिणा ॥

पत्ये नमः करोद्धर्तनं समर्पयामि ।

---

॥ हंसोदकम् ॥

तप्तं तप्तांशुकिरणै श्शीतं शीतांशुरश्मिभिः
समन्तादप्यहोरात्र मगस्त्योदय निर्विषं ।
शुचि हंसोदकं नाम निर्मलं मलजिज्वलं
नाभिष्यन्दि नवा रूक्षं पानादिष्वमृतोपमं ॥ (बृहन्निघंटुरत्नाकरे)

॥ जलपानविधिः ॥

द्रवाधन्नं तु चेत्सेवे तत्रांबु न पिवेद्बहु ।
मध्ये तु कठिणेभक्ष्ये यथेष्टं शस्यते जलं ॥
तथा च भोजनस्यान्ते पीतमंबुबलप्रदं ॥ १ ॥
दृष्टिपूतंन्यसेत्पादं वस्त्रपूतं पिबेज्जलं ।
सत्यपूतं वदेत् वाचं मनः पूतं समाचरेत् ॥ २ ॥

॥ हस्तपादादिप्रक्षाळनम् ॥

सलिलं निर्मलं रौप्यगळन्तीगाळितं शुचि ।
हस्तप्रक्षाळनार्थाय गृहाण करुणानिधे ॥
पत्ये नमः॥ हस्तप्रक्षाळनं समर्पयामि ।
पत्ये नमः॥ मुखप्रक्षाळनं समर्पयामि ।
पत्ये नमः॥ गण्डूषं समर्पयामि ।
पत्ये नमः॥ पादप्रक्षाळनं समर्पयामि ।
पत्ये नमः॥ शुद्धाचमनीयं समर्पयामि ।
पत्ये नमः॥ हस्तमार्जनार्थं श्वोतवस्त्रं च समर्पयामि ।

---

Methods of Gargling.

कुर्याद्द्वादश गंडूषान् पुरीषोत्सर्ज्जनेत्ततः ।
मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडशः ॥
सुखोष्णोदक गण्डूषः कफारुचि मलापहः ।
दन्तजाड्य हरश्चापि मुखलाघव कारकः ॥

The number of gargles prescribed after taking food, are 16 so as to avoid Pyrreah of teeth and keep the mouth clean without allowing decomposition due to the particles of the food remaining in the mouth. Proper gargling with hot water as often as directed by Shastras will avoid Listerine, Hydrogen Paraxide etc medicines

॥ हस्त पादप्रक्षालन गुणाः ॥

प्रक्षालनं मृदापाण्योः पादयोः शुद्धिकारकः ।
मलश्रमहरं वृष्यं चक्षुष्यं राजसापहम् ॥

॥ मुखवासः ॥

क्रमुकं नारिकेलं च कंकोलं जातिपत्रकं ।
एलामधुरिकादीनि मिश्रितं मुखवासकं ।
मुखस्य वासनार्थाय गृहाण मृदुहासतः ॥

पत्ये नमः मुखवासं समर्पयामि ।
पत्ये नमः पञ्चसुगंधिकं च समर्पयामि ।

॥ ताम्बूलम् ॥

ताम्बूलपंचकं

पूगीफलसमायुक्तं नागवल्लीदलैर्युतं ।
कर्पूरेण समायुक्तं ताम्बूलं प्रतिगृह्यतां ॥ १ ॥

---

॥ मुखवासः ॥

श्वेतपत्रं च चूर्णं च क्रमुकस्य फलानि च ।
नारिकेळफलोपेतं मातुलुङ्ग समायुतम् ।
एलालवङ्गतक्कोलैर्मुखवासं प्रचक्षते ॥ (आचारेन्दौ)

॥ पञ्चसुगन्धिकं ॥

तक्कोलकं पूगफलं लवंग कुसुमानि च ।
जातीफलानि खर्जूरमेतत्पंच सुगन्धिकम् ॥

Value of Betul leaves.

कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्य मावहति वक्त्रसुगंधितां च ।
ऊर्जं करोति कफजांश्च विहन्ति रोगान्
ताम्बूलमेव मपरांश्च गुणान् करोति ॥

**ताम्बूलं कटुतिक्तमुष्णमधुरं चास्ये सुगंधावहं**
**दाहघ्नं कफनाशनं रुचिकरं बिंबोष्ठरागप्रदं ।**
**वक्त्रस्याभरणं प्रहर्षजननं स्नेहस्य संवर्धनं**
**कान्ताप्रेमविवर्धनं शुभकरं प्रीत्या प्रभो स्वीकुरु ॥**

---

13 Valuable effects of Betul leaves.

ताम्बूलं कटुतिक्तमुष्ण मधुरं क्षारं कषायान्वितं ।
वातघ्नं कपनाशनं कृमिहरं दौर्गन्ध्य दोषापहं ॥
वक्त्रस्याभरणं मलापहरणं कामाग्नि संदीपनं ।
तांबूलस्यसखे त्रयोदशगुणाः स्वर्गेप्यमी दुर्लभाः ॥

27 Valuable effects of Betul leaves.

ताम्बूलं कटुतिक्तमुष्ण मधुरं क्षारं कषायं सरं ।
रुच्यं वीर्यकरं लघुप्रियकरं वैशद्य सौगन्ध्यकृत् ॥
आस्यस्याभरणं प्रसेकशमनं दौर्गन्ध्य हृच्छुद्धिकृत् ।
जन्तुश्लेष्म मरुद्गलामयहरं कान्तिप्रदं वश्यकृत् ॥
वृष्यं दन्त विरञ्जनं श्रमहरं सौभाग्यदं कीर्तितम् ।
जिह्वा जाड्यगदापहं मुनिवरैः नक्षत्रगुण्यं मतम् ॥

The good effects of Areca-Nuts.

पूगं गुरुतमं रूक्षं कषायं कपपित्तनुत् ।
मोहनं दीपनं रुच्यं आस्यवैरस्य नाशनम् ॥

The good effects of Catchew.

खदिरः कफपित्तघ्नः चूर्णं वात बालासनुत् ।
संयोगतः त्रिदोषघ्नः सामरस्यं करोति च ॥

जातीपत्रफलैस्सितासुखदिरै रेलालवंगैस्त्वचैः
मुक्ताचूर्णसुपूगकेसरखसैः कर्पूरकैर्वालकैः ।
कस्तूर्या सहितं सुवीटिरचितं रत्नस्फिचि स्थापितं
सौवर्णावृत षोडशांगकमिदं ताम्बूलमंगीकुरु ॥ ३॥

नानादेशज नागवल्लिसुदळै स्सुस्वादुभिः कल्पितं
गुंजापत्र सुनारिकेळ सहितं सिक्तं च पुष्पोदकैः ।
ताम्बूलं शुकवृक्षताळसदृशं वीव्यादि नानाविधं
स्वर्णाक्तानि च नागवल्लिसुदळान्यानंदतः स्वीकुरु ॥

तांबूली मृदुला सदाप्रियकरी सौभाग्यसम्पत्करी
हारीता च सुपांडरा गुणकरी रम्या सुवर्णाम्बरी ।

---

The effiicacy of lime producing red colour giving beauty to lips and acting as disinfectant in the mouth.

युक्तेन चूर्णेन करोतिरागं रागक्षयं पूगफलातिरिक्तम् ।
चूर्णाधिकं वक्त्रविगन्धकारि पत्राधिकं साधुकरोतिगन्धम् ॥

Disadvantages due to taking large quantity of Betul leaves.

ताम्बूलं नातिसेवेत न विरक्तो बुभुक्षितः ।
देहदृक् केशदन्ताग्नि श्रोत्रवर्ण बलक्षयः ॥

शोषः पित्तानिलास्त्रं स्याददतिताम्बूल भक्षणात् ।
ताम्बूलं न हितं दन्त दुर्बले क्षयरोगिणाम् ॥

विषमूर्च्छार्म दार्तानां क्षतिनां रक्तपित्तिनाम् ।

नानागन्धयुता च पाचनकरी कल्याणशोभाकरी
सर्वप्रीतिकरी सुशोभनकरी सङ्गृह्यतां श्रीकरी ॥

पत्येनमः॥ ताम्बूलं समर्पयामि ।
पत्येनमः॥ नानाविधविचित्रवीटीं समर्पयामि ।
पत्येनमः॥ नागवल्लीदळानि च समर्पयामि ।

---

खदिरैलालवंगत्वङ्मुक्ताचूर्ण तमालकैः ।
जातीफल दळैश्चन्द्र कस्तूरी केसरैर्युतं ॥
सिताभिः खसबीजैश्च गुंजापत्रैश्च वालकैः ।
सौवर्णपत्र संवीतं तांबूलं षोडशांगकम् ॥
वक्त्रालङ्करणंदिव्यं गृहाण मुखभूषणम् ।

1. खदिर - காசிகட்டி. 2 .एला - ஏலக்காய். 3. लवंग - கிராம்பூ 4. त्वक् - லவங்கபட்டை. 5. मुक्ताचूर्ण - முத்து சுண்ணம்பு. 6. तमालपत्रं - தமாலபத்ரம். 7. जातीफलं - ஜாதிக்காய். 8. दळं (जातीपत्रं) - ஜாபத்திரி. 9. चंद्र - பச்சகர்பூரம். 10. कस्तूरि - கஸ்தூரி. 11. केसरः - குங்குமப்பூ. 12. सिता - சோம்பு. 13. खसबीजं - கசகசா. 14. गुंजापत्रं - குண்டுமணி இலை(திந்திப்பு). 15. वालकं - வால்முளகு. 16. सौवर्णपत्रसंवीतं - தங்கரேக்கிளுல் சுத்தபட்ட षोडशांगकं அல்லது 16 அங்கங்களுடைய வெத்திலே பாக்கு பீடா.

॥ ताम्बूलनिषेधः ॥

ताम्बूलं पाण्डुमेह प्रकटित नयनोन्माद तृष्णातुराणां ।
संशुद्धक्षीरपीत श्रमयदविषपैत्यास्र शोभान्वितानां ॥
मूर्छातीसारकृच्छ्रप्रदरवमि महादेह दाहार्दितानां ।
त्वग्दोषापस्मृतीनां क्षयगतविषसर्प्यर्दितानां न पूज्यम् ॥

॥ दक्षिणा ॥

श्रीरामटङ्कं गजलक्ष्मिमुद्रां
श्रीवेङ्कटेशादियुतं च नाणकं ।
पूजादिसाद्गुण्यसुसाधकं च
गृहाण सौवर्णमयीं सुदक्षिणां ॥
पत्येनमः दक्षिणां समर्पयामि ।

॥ सुवर्णपुष्पम् ॥

सुवर्णपुष्पं माणिक्यमुक्तामरकताद्युतं ।
दातुरिंद्रासनप्राप्तिकरं स्वीकुरु मानद ॥

सुवर्णपट्टीं च सुवर्णयूथीं सुवर्ण जातीं च सुवर्णमालतीं।
सुवर्णचंपं च सुवर्णकेतकीं गृहाण सौवर्णमयं सुपुष्पम् ॥
पत्येनमः॥ सुवर्णपुष्पं समर्पयामि ॥

॥ पूर्णफलार्पणम् ॥

फलेन फलितं सर्वं त्रैलोक्यं सचराचरं ।
तस्मात्फलप्रदानेन सफलात्युर्मनोरथाः ॥ १ ॥

इदंफलं मयानाथ स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिः भवेज्जन्मनिजन्मनि ॥ २ ॥

फलं मनोरथफलं प्रददाति सदानृणां ।
सत्पुत्र पौत्रनप्तारः सन्तुमे फलदानतः ॥ ३ ॥

**अद्यमे सफलोधर्मः अद्यमे सफलंधनं ।**
**अद्यमे सफलंज्ञानं अद्यमे सफलंव्रतम् ॥ ४ ॥**

**अद्यमे सफलंदानं अद्यमे सफलंयशः ।**
**अद्यमे सफलं जन्मजीवितं सफलं च मे ॥ ५ ॥**

***पत्येनमः हरिद्राक्त कुंकुमस्वस्तिक चिह्नित नारिकेळादि फलयुग्मं समर्पयामि ।**

॥ नारिकेळफलसमर्पणफलम् ॥
नारिकेळसमुद्भूत त्रिणेत्रहरसंमत ।
शिखयादुरितंसर्वं पापं पीडां च मे नुद ॥

---

*** ॥ स्वस्तिकफलम् ॥**

विष्ण्वालये शिवद्वारे गवां गोष्ठे शुभस्थले ।
सहस्र स्वस्तिकानां तु येन भक्त्या समर्पितम् ॥
पुत्रपौत्र समायुक्तो मोदमानः पुनः पुनः ॥

**स्वस्तिक** gives the same good result as the **स्वस्ति**, the word indicating to give auspicious results as is found in Veda.

स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्तिनः पूषा विश्व वेदाः ।
स्वस्ति नस्ताक्ष्यों अरिष्ठनेमिः । स्वस्ति नो बृहस्पति र्दधातु ॥

**॥ नारिकेळफल गुणाः ॥**

नारिकेलफलं शीतं दर्जरं वस्तिशोधनम् ।
विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत् ॥
विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरमूत्रदोषाम् ।
तदेव जीर्णं गुरुपित्तकारि विदाहि विष्टम्भि मतं भिषम्भिः ॥

गार्हस्थ्येऽपि स्थिता नारी भक्त्या संपूजयेत्पतिं ।
स एव देवता तस्याः पूज्यः पूज्यतरश्चसः ॥



पादयोस्तेतु चत्वारि नाभौ द्वे वदने प्रभो ।
एकं तु सप्तवारंवै सर्वांगेषु निरञ्जनम् ॥

॥ शुभफलार्पणम् ॥

कान्ताप्रेमफलं यशस्सुखफलं सत्पुत्रपौत्रं फलं
भव्यं राज्यफलं शतायुषफलं लक्ष्मीकटाक्षं फलं ।
देहारोग्यफलं सदाशुभफलं गोविंदसेवाफलं
अष्टैश्वर्यफलं समस्तसुफलं(भगवत्)*पूजाफलं गृह्यताम्॥
पत्येनमः बहुशुभफलानि समर्पयामि ॥

॥ आरात्रिकपंचकम् ॥

॥ मंगळहारतिः ॥

पादयोस्ते तु चत्वारि नाभौ द्वे वदने प्रभो
एकं तु सप्तवारं वै सर्वाङ्गेषु निरंजन ।

---

*॥ शिवपूजाफलम् ॥

यद्द्वारे मत्तमातङ्गाः वायुवेगास्तुरङ्गमाः ।
पूर्णेन्दु वदनानार्यः शिवपूजा विधेः फलम् ॥

॥ आरात्रिकदीपलक्षणम् ॥

एकवर्तिर्द्विवर्तिर्वा पंचसप्त तथा नव ।
द्वात्रिंशद्वर्तिसंयुक्तं षोडश द्वादशाष्ट वा ।
मध्ये दीपसमायुक्तं दीपलक्षण मुच्यते ॥
दीपं सप्तांगुलोत्सेधं दर्शयेद्देव सन्निधौ ॥

॥ आरात्रिक दीपद्रव्याणि ॥

तिल बिल्वादि तैलं च वृक्षतैल मथापि वा ।
कपिलादि घृतं चैव दीपद्रव्यमिहोच्यते ॥

सर्वमंगळदं दिव्यं नेत्रानंदकरं शुभं
मङ्गळारात्रिकेनैवं नाथ नीराजयाम्यहं ॥

पत्येनमः मंगळारात्रिकेन नीराजनं समर्पयामि।

---

॥ आरातिक्यवर्ज्यतैलानि ॥

करंजं चाम्रनिंबं च एरंडादीनि वर्जयेत् ॥

॥ पञ्चवर्तिदीपमहिमा ॥

पंचवर्तिसमामुक्तं पंचपातकनाशनं।
पंचास्यदीपं दास्यामि पञ्चपापप्रभञ्जन ॥

॥ आरात्रिक प्रकारः ॥

आदौ चतुष्पादतले च विष्णोः द्वौनाभिदेशे मुखमण्डलैकं।
सर्वेषु चाङ्गेष्वपि सप्तवारान् आरात्रिकं भक्तजनस्तु कुर्यात् ॥

॥ पञ्च नीराजनम् ॥

पञ्चनीराजनं कुर्यात् प्रथमं दीपमालया।
द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा ॥
चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्तितम्।
पञ्चमं प्रणिपातेन साष्टाङ्गेन यथा विधि ॥ (कालोत्तरतन्त्रम्)

॥ आरात्रिकस्य वर्तिकादि प्रकारः ॥

कुङ्कुमागुरुकर्पूरघृतचन्दननिर्मिताः।
वर्तिकाः सप्तवापञ्च कृत्वा वन्दापनीयकं ॥
कुर्यात् सप्तप्रदीपेन शङ्खघण्टादिवाद्यकैः।
हरेः पञ्चप्रदीपेन बहुशो भक्तितत्परः ॥ (पाद्मोत्तरखंडे अ. १०७)

॥ पुष्पहाररतिः ॥

त्रिसंन्ध्यैस्सूर्यपुष्पैश्च रात्रिपुष्पैश्च चंद्रकैः
दृष्टिकृद्दीपकैश्चापि शोभांजनसुमैश्शुभैः ।
चित्रिते रत्नखचितस्वर्णपात्रे निवेशितैः
दीपैर्नीराजयामि त्वां कल्याणाय शुभप्रद ॥

पत्येनमः॥ पुष्पहाररतिं समर्पयामि ।

॥ रत्ननीराजनम् ॥

मुक्तारत्नसमायुक्ते नानावर्णविचित्रिते ।
सुवर्णपात्रे निक्षिप्तैः दीपैर्नीराजयाम्यहं ॥

पत्येनमः॥ रत्ननीराजनं समर्पयामि ।

॥ चित्रदीपनीराजनम् ॥

एकाररतिं द्व्याररतिं च त्र्याररतिं चतुराररतिं ।
पंचाररतिं पंचमहायज्ञप्रिय विलोकय ॥

रथदीपं तथा नक्षत्राररतिं गजदीपकं ।
हंसदीपं सिंहदीपं सूर्यचंद्राररतिं तथा ॥

मयूरमेरुदीपादीन्याराररतिक्यानि नायक ।
नानादीपावलिं दृष्ट्वा देदीप्य त्वं(स्व)दयानिधे ॥

पत्येनमः नानाविधदीपनीराजनं समर्पयामि ।

॥ कर्पूरनीराजनम् ॥

कर्पूरवर्तिरचितं दृष्टिदोषनिवारणं ।
नीराजनं मया दत्तं गृहाण वरदो भव ॥

॥ नीराजनगीतम् ॥

करुणापारावारं कल्मषपरिहारं
कलशाम्बुधिगंभीरं कनकाचलधीरं
कलवचनामृतसारं कवचितगुणवारं
कलये कान्तमुदारं कल्पितसुखपूरं

जय देव जय देव जय शेखर श्रीसुरहरप्रियवर
तव चरणौ हृदये कलयेऽहं जय देव जय देव ।

विबुधामोदनलीलं मङ्गळकरशीलं
वेदोदितकृतिलोलं विस्तृतगुणजालं
विस्मेराननकमलं विश्रुतकीर्तिबलं
विपुलसभावाचालं विन्देय पतिं विमलं

जय देव जय देव जय शेखर श्रीसुरहरप्रियवर
तव चरणौ हृदये कलयेऽहं जय देव जय देव ।

सर्वसमादृतवेषं सरसप्रियभाषं
सकलकलासुमनीषं सज्जनपरिपोषं

सवितुरुपासनतोषं सततश्रुतिघोषं
सेवे नाथमदोषं परिहृतपरयोषम्

जय देव जय देव जय शेखर श्रीमुरहरप्रियवर
तव चरणौ हृदये कलयेऽहं जय देव जय देव ॥
पत्येनमः कर्पूरनीराजनं समर्पयामि ।
नीराजनानन्तरं आचमनीयं समर्पयामि ।

॥ दृष्ट्यपसारणम् ॥

पिष्टमुष्टियुगं नाथ रक्तवर्णं पुरस्तव ।
दृष्टिदोषविनाशाय त्रिवारं भ्रामयाम्यहं ॥

इति पिष्टमुष्टियुगंपत्युः पुरोभागे त्रिवारं भ्रामयित्वा दक्षिणोत्तरभागयोः प्रक्षिपेत् ।

॥ मन्त्रपुष्पम् ॥

सुरग नागरंगकं च भृंगनागलिंगकं
लवंगकं प्रियंगु रंगमल्लि गन्धराजकं ।
सुवर्णरक्त चंपकं च पीत नील चंपकं
गृहाण भूमिचंपकं लता मधूक चंपकम् ॥

जपोपजाति पारिजातजाति कुब्जसर्जकं
नमेरुकं च कैतकं च कुन्दचक्रमर्दकं ।

सुगन्धघ्राण पुष्पकं च पञ्चबाणबाणकं
जयन्ति देववल्लभं गृहाण प्राणवल्लभ ॥

॥ वेदपुराणोक्तमन्त्रपुष्पस्तुतिः ॥

भर्ता देवो गुरु भर्ता धर्मतीर्थव्रतानि च ।
तस्मात्सर्वं परित्यज्य पति मेकं समर्चयेत् ॥

॥ शङ्ख उवाच ॥

न व्रतेनोपवासेन धर्मेण विविधेन च ।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥

सततं देववत्पूज्यः साध्व्या वाक्कायकर्मभिः ।
व्रतं तपस्यां देवार्चां परित्यज्य प्रयत्नतः ॥

॥ मनुरुवाच ॥

नास्ति स्त्रीणां पृथग्यज्ञो नव्रतं नाप्युपोषितं ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥

॥ अत्रिरुवाच ॥

तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।
शङ्करादपि विष्णोर्वा पतिरेवाधिकः स्त्रियाः ॥

यापतिं हरिभावेन भजेच्छ्रीरिव तत्परा ।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥

॥ ईश्वर उवाच ॥

तस्मिं स्तुष्टिः परो धर्मस्तस्य वै परिचर्यया ।
तोषमायाति सर्वात्मा परमात्मा जनार्दनः ॥

यया प्रियः पूजितश्च श्रीकृष्णः पूजितस्तया ।
पतिव्रताव्रतार्थं च पतिरूपी हरिस्स्वयम् ॥

॥ श्रीकृष्ण उवाच ॥

श्रवणात् दर्शनात् ध्यानात् मम भावानुकीर्तनात् ।
न तथा संनिकर्षेण यथापति निषेवणात् ॥

नानाचम्पकवल्लीभि र्मनोरंजितकुब्जकैः ।
मंत्रपुष्पं प्रदास्यामि प्राणेशपदपद्मयोः ॥

ओं नमः कान्ताय शान्ताय सर्वदेवाश्रयाय स्वाहा ॥

भर्तृदेवाय विद्महे प्राणनाथाय धीमहि तन्नः पतिः प्रचोदयात् ॥

पत्येनमः पादयोः मंत्रंपुष्पं समर्पयामि ।

॥ पुष्पांजलिः ॥

(वसन्ततिलका वृत्तम्)

श्रीनागलिंग शिवलिंगगणेशपुष्पं
सिद्धेश्वरं पशुपतं सहदेविपुष्पं ।
श्वेतारुणं मकरकुण्डल नंदिवर्धं
पुष्पं गृहाण शतपत्र मथार्पितं च ॥

(शार्दूल विक्रीडितम्)

शंखं चक्र वराह पद्मकुसुमं कोदंड चंडं जयं
वैकुण्ठं शुभनागकेसरयुतं श्रीमाधवं चाच्युतं ।
लक्ष्मीपुष्प सुविष्णुकान्त कुसुमं कृष्णं श्रियावर्तकं
बाणं मन्मथबाणकं च कुसुमं श्रीरामबाणं धर ॥

(अनुष्टुप्)

मुक्तारत्नैः स्वर्णपुष्पैः पुष्पैश्चांजलिकादिभिः ।
पुष्पांजलिं प्रदास्यामि किरीटे प्राणनायक ॥

पत्येनमः शिरसि पुष्पांजलिं समर्पयामि ।

॥ आन्तरसद्गुणपुष्पसमर्पणम् ॥

अहिंसा प्रथमं पुष्पं पुष्प मिंद्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ॥

---

पञ्चपुष्पाञ्जलीन्दत्वा परिवारार्चनञ्चरेत् ॥ (तन्त्रसारे)

ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च ।
सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत् ॥

इमान्यान्तरपुष्पाणि सर्वपुष्पाधिकानि वै ।
भक्त्या मया चार्पितानि प्रसन्नो भव नायक ॥

पत्ये नमः आन्तरगुणपुष्पाणि समर्पयामि ।

॥ प्रदक्षिणम् ॥

यानिकानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिण पदे पदे ॥

पुण्याहं पुण्यकर्माहं पुण्यात्मा पुण्यसंभवा
रक्ष मां कृपया नाथ शरणागत वत्सल।

---

॥ प्रदक्षिण शब्द निर्वचनम् ॥

प्रसार्य दक्षिणंहस्तं स्वयं नम्रशिराः पुनः ।
दक्षिणंदर्शयन्पार्श्वे मनसापि च दक्षिणः ॥
सकृत्त्रिर्वा वेष्टयेद्देव्याः प्रीतिः प्रजायते ।
सचप्रदक्षिणोज्ञेयः सर्वदेवौघतुष्टिदः ॥ (कालिकापुराणे अ. ७०)

॥ नानादेवताप्रदक्षिणविधिः ॥

एकं देव्यां रवौ सप्त त्रीणिकुर्या द्विनायके ।
चत्वारिकेशवे कुर्यात् शिवेचार्द्ध प्रदक्षिणम् ॥ ( चर्मलोचनम् )
प्रदक्षिणेनाति बलेन पक्षिणा
जटायुषा बुद्धिमता च लक्ष्मण ॥ (रामायणे-३, ४२, ५१.)

अन्यथा शरणं नास्ति त्वमेव शरणं मम
तस्मात्कारुण्यभावेन रक्षस्व मम नायक ॥

पत्येनमः प्रदक्षिणानि समर्पयामि ।

॥ नमस्कारः ॥

नमः श्रीप्राणनाथाय सर्वदेवस्वरूपिणे ।
चतुरंगप्रणामोस्तु सर्वाधाराय ते नमः ॥

---

॥ प्रदक्षिण माहात्म्यम् ॥

यस्त्रिः प्रदक्षिणं कुर्यात् साष्टाङ्गक प्रणामकं ।
दशाश्वमेधस्य फलंप्राप्नुयान्नात्र संशयः ॥ (वराहे)
प्रदक्षिणंसमोनास्ति प्रत्यक्षफलदोभुवि ।
युग्मं प्रदक्षिणंकुर्यात् अयुग्मं त्वभिचारकम् ॥

॥ अष्टाङ्ग नमस्कारम् ॥

उरसा शिरसादृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टाङ्ग मुच्यते ॥

॥ त्रिविधं नमस्कारस्य लक्षणम् ॥

कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः ।
नमस्कारस्तु तत्वज्ञै रुत्तमाधम मध्यमः ॥

॥ प्रणामनिर्वचनम् ॥

पुलकांचितसर्वाङ्गः परमानन्द निर्भरः ।
प्रणमेद्भगवत्पादौ सप्रणाम इतिस्मृतः ॥

॥ पंचधाप्रणामः ॥

मस्तिष्कं संपुटं चैव प्रत्यांगं स्वस्तिकं तथा ।
दंडांगं च नमस्कारः पंचधा परिकीर्तिताः ॥

सामवेदोक्तमंत्रेण भोगद्रव्यै :सुधोपमै : ।

संपूज्य भक्तित : कांतं स्तुत्वाचप्रणमेन्मुदा



नमो ब्रह्मस्वरूपाय सती प्राण परा‌य च ।

नमस्याय च पूज्याय हृदाधारायने नम : ॥

पुलकांचितसर्वांगैः परमानन्दनिर्भरैः ।
नमस्करोमि पादौ ते यथाशास्त्र प्रमाणतः ॥

पत्येनमः नमस्करोमि । चरणस्पर्शं च करोमि ।

॥ दर्शनम् ॥

*आसीनं मौलिपर्यन्तं पश्यन्त्याः पुरुषोत्तमं ।
नमन्त्याः भूरिपुण्यानि भवन्ति सफलाः क्रियाः ॥

पत्येनमः चरणस्पर्शानन्तरं दर्शनं करोमि ।

॥ स्तोत्रम् ॥

नमः कान्ताय भर्त्रे च शिरश्चंद्रस्वरूपिणे ।
नमश्शान्ताय दान्ताय सर्वदेवाश्रयाय च ॥

नमोब्रह्मस्वरूपाय सतीप्राणपरायच ।
नमस्याय च पूज्याय हृदाधाराय ते नमः ॥

पंचप्राणाधिदेवाय चक्षुषस्तारकायच ।
ज्ञानाधाराय पत्नीनां परमानंदरूपिणे ॥

पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः ।
पतिश्चनिर्गुणाधारब्रह्मरूपी नमोस्तुते ॥

---

*आसीनां मौलिपर्यन्तं पश्यतः पुरुषोत्तमं ।
नमतः पातकं नास्ति भवन्ति सफलाः क्रियाः ॥

क्षमस्व भगवन् दोषं ज्ञानाज्ञानकृतं च यत् ।
पत्नीबन्धो दयासिंधो दासीदोषं क्षमस्व मे ॥

इति पुराणोक्त पतिस्तोत्रं कुर्यात् ।

॥ फलश्रुतिः ॥

इदं स्तोत्रं महापुण्यं सृष्ट्यादौ पद्मया कृतं ।
सरस्वत्या च धरया गंगया च पुरा व्रज ॥

सावित्र्यापि कृतं पूर्वं ब्रह्मणे चापिनित्यशः ।
पार्वत्या च कृतं भक्त्या कैलासे शंकराय च ॥

मुनीनां च सुराणां च पत्नीभिश्च कृतं पुरा ।
पतिव्रतानां सर्वासां स्तोत्रमेतच्छुभावहम् ॥

इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता ।
नरोन्योवापिनारी वा लभते सर्ववांछितम् ॥

अपुत्रो लभते पुत्रं निर्धनो लभते धनं ।
रोगार्तो मुच्यते रोगात् बद्धो मुच्येत बंधनात ॥
पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत् ॥

इति ब्रह्मपुराणे कृष्णजन्मखण्डे पतिमहिम्नस्तोत्रं
सम्पूर्णम् ॥

सुपुण्ये भारते वर्षे पतिसेवां करोतिया ।
वैकुण्ठे स्वामिनासार्धं सायाति ब्रह्मणः शतं ॥



भास्वन्मौक्तिक जालिकापरिवृतं चक्षुर्हितं मंगलं ।
श्वेतच्छत्रमहं धरामि सुखदं लक्ष्मी विलासास्पदम् ॥

# ॥ अथ राजोपचारपूजा ॥

॥ संकल्पः ॥

अद्य पूर्वोक्तएवं गुणविशेषणविशिष्टायां अस्यां शुभतिथौ मम पतिदेवताप्रीत्यर्थं राजोपचारपूजां च करिष्ये ॥

इति साक्षतं जलं विसृज्य ।

॥ छत्रम् ॥

राजत्कांचनदण्डमण्डित मिदं पूर्णेन्दुबिम्बप्रभं ।
नानारत्नविशोभिहेमकलशं वर्षातपावारकं ॥
भास्वन्मौक्तिकजालिकापरिवृतं चक्षुर्हितं मंगळं ।
श्वेतच्छत्र महं धरामि सुखदं लक्ष्मीविलासास्पदम्॥

पत्ये नमः छत्रं धारायमि ।

---

॥ राजोपचारविधिः ॥

छत्रं च चामरे घंटां दर्पणं वाहनादिकं
नृत्य गीतादिमिश्चैव नानावीणादि वादनैः ।
सर्वदेवोत्तमत्वादिव्यञ्जकान्विरुदानपि
समर्प्य स्तोत्ररत्नैश्च स्तुत्वा भक्त्या प्रपूजयेत् ॥

॥ छत्रधारणफलम् ॥

छत्रस्य धारणं वर्षातप वातरजोपहं
हिमघ्नं हितमक्ष्णोश्च माङ्गल्यमपि कीर्तितं ।

॥ चामरं ॥

चामरे रत्नखचितस्वर्णदण्डसुमण्डिते
स्थिरसम्पत्करे शुक्ले चायुर्वृद्धिकरे शुभे ।
सुखानिले तथा दिव्ये मायूरीपिंछ निर्मिते
महाराजोचिते नाथ परितश्चालयाम्यहं ॥

पत्ये नमः चामराभ्यां वीजयामि ।

---

वर्षानिलरजोघर्म हिमादीनां निवारकं
राज्यलक्ष्म्या गृहं धन्यं चक्षुष्यं स्वर्णदण्डकं ॥

॥ छत्रमंत्रः ॥

यथा बुदच्छादयति शिवाये मां वसुन्धराम् ।
तथा च्छादय मां नित्यं विजयारोग्य वृद्धये ॥

॥ चामरलक्षणम् ॥

चामरे वस्त्रसंभूतो मायुरो वेत्रजस्तथा ।
एते दोषजितो वायोः स्निग्धाह्वयाः सुपूजिताः ॥

॥ चामरवीजनगुणम् ॥

वायुरोगा प्रणश्यन्ति तस्य वीजनवायुना ॥

॥ चामरमन्त्रः ॥

शशांककरसंकाशं क्षीरडिंडीरपांडुर ।
प्रोत्सारया शुदुरितं चामरामरदुर्लभ ॥

स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः
पतिशुश्रूषणान्नार्यास्तपो नान्य।द्वधीयते ॥



चामरेरत्नखचिते स्वर्णदण्डसुमण्डिते ।
महाराजोचितेनाथ परितश्चालयाम्यहं ॥

नास्तिस्त्रीणां पृथक्यज्ञोनव्रतं नाप्युपोषितं
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥



पंचवर्ण सुकौशेयैः स्वर्णचित्रविचित्रितैः ।
व्यजनैर्वीजयामित्वां प्रसूमामोदवाहिभिः ॥

॥ व्यजनम् ॥

पंचवर्णसुकौशेयैः स्वर्णचित्रविचित्रितैः
मयूरपिंछोशीराद्यैश्चंदनेनचनिर्मितैः ।
स्वर्णमुष्ट्यादिसंयुक्तै र्विद्युच्छक्त्यादिसंयुतैः
व्यजनै र्वीजयामि त्वां प्रसूनामोदवाहिभिः ॥

पत्ये नमः कौशेयादिस्वर्णचित्रितव्यजनेन वीजयामि ।

गीतम् (पञ्चचामरवृत्तम्)

वसन्तराग मालकोश मेघराग मालवी
हिन्दोल गौळ तोडि राग भैरवं च भैरवी ।

---

॥ व्यजनगुणाः ॥

तालव्यजन जो वायुः त्रिदोष शमनो लघुः
वंशव्यजन जो वायुः रूक्षोष्णो वातपित्त कृत् ।
वेत्रवस्त्रकेकिपुच्छ व्यजनोत्थस्त्रिदोष नुत्
वालव्यजन जो वायुः मक्षिकादि निवारकः ।
तेजस्करो सौविज्ञेयो विद्वद्भिर्भिषजां वरैः
मूर्छादाह तृषाघर्म श्रामनुद्व्यजनानिलः ॥
व्यजनस्यानिलोदाह स्वेदमूर्छाश्रमापहः
तालवृन्तभवो वातः स्त्रिदोष शमनोमतः
वंश व्यजनजस्तूष्ण रक्तपित्त प्रतापनः ॥

॥ गीतलक्षणम् ॥

सुस्वरं सुरसं चैव सुराग मधुराक्षर ।
सालंकारं प्रमाणं च षड्विधं गीतलक्षणम् ॥

बिलावली च दीपराग कोकिला सुरागिणी
श्रूयतां सुखावहं सुमोहना च सोहनी

(शार्दूलविक्रीडितम्)

पूर्वी रामकली पलाश ललिता श्रीराग भूपालिका
गौरी कौशिक शङ्कराभरण सौराष्ट्री च काम्बोजिका।
सावेरी सुरठी च सिंधु मधुरी केदार वागीश्वरी
कल्याणी च धनासरी च सहितं गीतं प्रभो श्रूयताम्॥

(अनुष्टुप्)

नानारागसमायुक्तं मधुरस्वरसंयुतं
तालमानलयाश्लिष्टं मूर्छनास्थानसंयुतं
ब्रह्मानंदकरं श्रेष्ठं श्राव्यं कर्णामृतोपमं।
चित्ताकर्षप्रवीण त्वं गीतं शृणु मनोहरं॥

पत्ये नमः गीतं श्रावयामि।

॥ वरगीतम्॥

शमदमगुणवर नटवर वरधर मनहर वरमूर्ते।
प्रियवर हरिहर शशधर दिनकर समशुभकरमूर्ते॥शम॥
परतर नित्य पुरन्दरमन्दिर समसुखकरमूर्ते।
धृतमणि मन्दर चन्दिर सुन्दरनरवर वरमूर्ते॥ शम॥

## ॥ संगीतम् ॥

# वीणा वेणु मृदंग काहल घटं मंजीरकं किन्नरीं सारंगीं शरमण्डलीं च मुरलीं झल्लीं जयां झल्लरीम्।

---

### ॥ रागनिर्वचनम् ॥

सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते ।
यतस्तुप्रणमोत्कर्षात् सराग इति कथ्यते ॥

### ॥ रागलक्षणम् ॥

योयं ध्वनिविशेषस्तु स्वरवर्ण विभूषितः ।
रञ्जको जनचित्तानां सरागः कथितो बुधैः ॥

### ॥ स्वरनिर्वचनम् ॥

श्रुत्यनन्तर जोयश्शब्दोऽनुकरणात्मकः ।
स्वरो रञ्जयति श्रोतुः चित्तं सस्वर उच्यते ॥

### ॥ षड्रागोत्पत्तिः ॥

शिवशक्तेः समायोगात् रागानां संभवोऽभवत् ।
पंचास्यात् पंच रागास्युः षष्टस्तु गिरिजा मुखात् ॥

### ॥ वेदात् रागोत्पत्ति प्रकारः ॥

सामवेदात्स्वरा जाता स्वरेभ्यो ग्राम संभवः ।
ग्रामेभ्यो जातयो जाताः जातिभ्यो राग संभवः ॥

### ॥ स्वरग्राममूर्छनादि संख्या प्रमाणम् ॥

सप्तस्वरास्त्रयो ग्रामः मूर्छनाश्चेक विंशतिः ।
द्वा विंशतिश्च श्रुतयः एतेभ्यो रागसंभवः ।
षड्जादयस्स्वरास्सप्त ग्रामौ द्वौ षड्जमध्यमौ ॥

सैरंध्रीं परिवादिनीं मधुकरीं ज्योषावतीं वल्लकीं
गीतं नृत्य सुवाद्य मिश्र मधुरं संगीत माकर्ण्यताम् ॥

पत्ये नमः सङ्गीतं श्रावयामि ।

॥ सुसंगीतम् ॥

सङ्गीतमपि साहित्यं सरस्वत्यास्स्तनद्वयं ।
स्वरेणपदसंयुक्तं छन्दसा च सुसंयुतं ॥
सुवाद्यतालसंयुक्तं सुसंगीतं च श्रूयताम् ॥

पत्ये नमः सुसंगीतमपि श्रावयामि ।

---

षड्रागः - Six Ragas.

भैरवीं मालकोशश्च हिंदोळो दीपकस्तथा ।
श्रीरागो मेघरागश्च षडैते पुरुषाः स्मृताः ॥

रागाङ्गनाः - Raginis or wives of Ragas.

भैरवी गुजरी रामकलि काटोदिका तथा ।
वैराटि स्वरसंयुक्तौ भैरवस्य वरांगनाः ॥
वसन्ती पंचमी चैव ललिता च बिल्लवती ।
केशाक्षसहिता एता हिन्दोलस्य वरांगनाः ॥
धन्याश्री नाटिका चैव जेतश्री च पलाशिका ।
कामोदि सहिता एता दीपकस्य वराङ्गनाः ॥
मालवी त्रिवळी गौरी पूर्विका टंकिका तथा ।
श्रीरागस्याङ्गनाश्चाथ सायंकाले प्रगीयते ॥
वागीश्वरी ककुभा च पर्यङ्का सोहनी तथा ।
स्वभावती गुनकली मालकोशस्य वल्लभाः ॥

## *॥ नृत्याष्टकम् ॥

नृत्तंताललयान्वितं च नटनं लास्यं तथा ताण्डवं
नृत्यं भावरसै र्युतं च ललितं दृश्यं च रासं शुभं ।
नारीभिश्च सुनर्तकैश्च रचितं रंगे प्रवृत्तं वरं
रंभाद्यप्सरसांगणैः कृतमिवश्लाघ्यं प्रभो दृश्यतां ॥ १ ॥

पत्ये नमः नृत्यं दर्शयामि ।

---

मल्हारो सोरठी चैव सारंगा बडहंसिका ।
मधुमाध्या च संयुक्ता मेघरागस्य वल्लभाः ॥

### ॥ कालसारूप्यात् तालस्य भगवत्‌रूपता ॥

तत्तत्ताल स्वरूपं अनेकधा तेषु प्रवेश्य तालस्यभगवद्रूपस्य सर्वव्यापकत्वं सर्वान्तर्यामित्वं च दर्शनीयमिति ॥

वसनिरसवतिहृदिसतां ननाकारान्वहन्नलंकारान् ।
श्रुतिमात्रवेद्यविभवो बहुतररागोऽथयोऽच्युतोजयति ॥

### ॥ स्वरस्य सर्वव्यापकत्वम् ॥

यथा शुद्धा सरिगमादिस्वराः सर्वेषु रागेषु प्रविश्य—स्वस्व सर्वव्यापकत्वं सर्वान्तर्यामित्वं च दर्शयन्ति—तथावाद्यतालगतयोपि ॥

* The Technical names of Indian Dances from the Shastraic 108 dances.

### ॥ गीतनिर्वचनम् ॥

धातु मातु समायुक्तं गीतमित्युच्यते बुधैः ।
तत्र नादात्मको धातुः मातुरक्षर संचयः ॥

अंचितं च कुंचितं निकुंचितं च सर्पितं
लोलितं च दण्डपात नूपुरं च वृश्चिकं ।
स्वस्तिकं कटीसमं निकुट्टकं च वर्तितं
दृश्यतां च छिन्नकर्ण मूर्ध्वजानु नर्तनम् ॥ २ ॥

पत्ये नमः नाट्यं दर्शयामि ।

आवर्तं हरिणप्लुतं च ललितं दिक्स्वस्तिकं क्रान्तकं
विद्युद्भ्रान्त समुन्नतं च वलितं संभ्रान्त विष्कंभकं ।
डोलपाद सुदंडपक्ष शकटं प्रेङ्खोळितं चार्गळं
विष्णुक्रान्त सुचक्रमण्डलमिदं नाट्यं प्रभो दृश्यतां ॥३॥

पत्येनमः नटनं दर्शयामि ।

---

॥ द्विविधंगीतम् ॥

गीतं च द्विविधं प्रोक्तं यन्त्रगात्र विभागतः ।
यंत्रं स्याद्वेणु वीणादि गात्रं तु मुखजं मतम् ॥

॥ गीतमहिमा ॥

शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी ॥
गीतेन हरिणा रंगं प्राप्नुवंत्यपि पक्षिणः ।
वनादायांति फणिनः शिशवो न रुदन्ति च ॥

॥ वेदादि गानमहिमा ॥

जपकोटि गुणं ध्यानं ध्यानकोटिगुणो लयः ।
लयकोटि गुणं गानं गानात् परतरं नहि ॥

लीनं स्वस्तिकरेचितं समनखं पादापविद्धं वरं
सूचीविद्धमथो नितंबकरणं घूर्णं भुजंगाश्चितं ।
पार्श्वक्रान्त निवृत्तकं च चतुरं सिंहस्य विक्रीडितं
मल्ली च मदस्खलं च भ्रमरं नाट्यं प्रभो दृश्यतां ।।४।।

पत्ये नमः नर्तनं दर्शयामि ।

उन्मत्तं शकटास्यकं च मणिकाक्रीडं तथा व्यंसितं
वक्षःस्वस्तिक संज्ञकं च वृषभक्रीडं लतावृश्चिकं ।

---

॥ नृत्यलक्षणम् ॥

देव ऋष्या प्रतीतेय सालमान रसाश्रितः ।
सविलासोंग निक्षेपो नृत्य मित्युच्यते बुधैः ॥

॥ द्विविधनृत्यम् ॥

तांडवं च तथा लास्यं द्विविधं नृत्य मुच्यते ।
पेवलि बहुरूपं च तांडवं द्विविधं मतम् ॥

॥ नाट्यं पञ्चमोवेदः ॥

इहानु श्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्य वेदेभ्यो नाट्य वेदं तु पंचमम् ॥

॥ गान्धर्ववेदोत्पत्तिः ॥

उपवेदोऽथवेदाश्च चत्वारः कथितास्मृतौ ।
तत्रोपवेदो गान्धर्वः शिवेनोक्तः स्वयं भुवा ॥

॥ नृत्यप्रवर्तनम् ॥

गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयं ।
लयताल समारब्धं ततो नृत्यं प्रवर्तते ॥

नाट्यं वृश्चिककरेचितं च वलितो वर्धनिकुट्टं तथा
दृष्ट्वानन्दय पृष्ठस्वस्तिकमथो विक्षिप्तिका क्षिप्तिकं॥५॥

पत्ये नमः अभिनयं दर्शयामि ।

सिंहाकं करहस्तकं च जनितां चोद्घट्टितं नाट्यकं
दिव्यं दण्डकरेचितं च भुजगत्रस्तं कटिभ्रान्तकं ।
वैशाखस्यचरेचितं शुभमतिक्रान्तार्धसूचिं तथा
दृष्ट्वानन्दय भो ललाटतिलकं चालातकं ताण्डवं ॥६॥

पत्ये नमः ताण्डवं दर्शयामि ।

---

॥ नृत्यफलम् ॥

यो नृत्यति प्रहृष्टात्मा भावैर्बहु सुभक्तितः
स निर्दहति पापानि जन्मान्तर शतेष्वपि

॥ नृत्यमहिमा ॥

नृत्यतां श्रीपतेरग्रे तालिकावदनैर्भृशम्
उड्डीयन्ते शरीरस्थाः सर्वे पातकपक्षिणः ॥

॥ नटराजकृष्णः ॥

कालियस्य फणामध्ये दिव्यं नृत्यं करोतितं ।
नमामि देवकीपुत्रं नृत्यराजान मच्युतम् ॥

॥ प्रचण्डशिवताण्डवम् ॥

जगत्वदभ्रविभ्रमभ्रमद्भुजंगमस्फुरे
द्धगद्धगद्धिनिर्गमत्करालभालहव्यवाट् ।

ऊर्ध्वत्तं तलपुष्पकं च स्खलितं चार्धं च मत्तालिका
मक्षिप्तस्य चरेचितं च सुमहा गंगावतारादिकं ।
सूचींचापि विवर्तितं च तलसंस्फोटं च गृध्रावलीं
लास्यं मण्डलस्वस्तिकं च विपुलं संदृश्य संतुष्यताम् ॥
पत्ये नमः लास्यं दर्शयामि ।

लास्यताण्डवसंयुक्तं नृत्यं च द्विविधं तथा ।
नानाविलाससंयुक्तं नानानाट्यं च दृश्यताम् ॥८॥
पत्ये नमः नानाविध नृत्यं दर्शयामि ।

---

धिमिद्धिमिद्धिध्वनन्मृदंगतुंगमंगल
ध्वनिक्रम प्रवर्तित प्रचंडतांडवः शिवः ॥

॥ प्रदोषकाल शिवताण्डवसेवा ॥

कैलासशैलभुवने त्रिजगज्जनित्रीं
गौरींनिवेश्य कनकाञ्चितरत्न पीठे ।
नृत्यं विधातुमभिवाञ्छति शूलपाणौ
देवाः प्रदोष समये नु भजन्ति सर्वे ॥

॥ नर्तकीवर्णनम् ॥

स्वेदक्लेदितकंकणां भुजलतां कृत्वा मृदङ्गाश्रयां
चेटीहस्तसमर्पितैकचरणां मंजीरसंधित्सया ।
साभूयः कुचकंपसूचितरयं निश्वांसमामुंचती
रंगस्थान मनंगसात्कृतवती मालावधूस्तस्थुषी ॥( सुभाषितरत्नभांडागार )

॥ वाद्याष्टकम् ॥

तन्त्रीवाद्यं वंशवाद्यं चर्मवाद्यं तथैव च ।
कांस्यवाद्यं च तालादीनाकर्णय मम प्रभो ॥

सुब्रह्मवीणां च सुरुद्रवीणां
निश्शङ्कवीणां महतीं च वीणां ।
कलावतीं वारणहस्तवीणां
सुकच्छपीं चापि शृणुष्व वीणां ॥ १ ॥

पत्ये नमः विविधवीणावाद्यानि श्रावयामि ।

मयूरवाद्यं च सुमोरचंगं
सितारबंजो [1]पणवादिवाद्यं ।
स्वरैक्यवाद्यं च [2]सुताल गोमुखं
श्रोत्रप्रियं वाद्यगणं शृणुष्व ॥ २ ॥

पत्ये नमः विनोदवाद्यानि श्रावयामि ।

---

॥ विवाहमहोत्सवादि कालेषु विविधवाद्यावश्यकता ॥

रुक्मिन्याः सत्यभामायाः कालिन्दी मित्रविन्दयोः ।
जाम्बवत्या नाग्नजित्या लक्ष्मणा भद्रयोरपि ॥
कृष्णस्याष्टमहिषीनां पुरोद्वाह महोत्सवे ।
ततं शुषिरमानद्धं घनञ्च युगपञ्चनाः ॥
अवादयन्न संख्यातमिति पौराणिकी श्रुतिः ॥

[1] सुपीटीलवाद्यम्
[2] तबलां च तालं

सुब्रह्मवीणां च सुरुद्रवीणां निश्शंकवीणां महतीं च वीणां।
कलावतीं वारण हस्तवीणां सुकच्छपीं चापि श्रृणुष्व वीणाम्



"इमौदंपती" तुम्बुरुनारदाविव वीणागानप्रवीणौ।
विश्वावसु वेणुगोपालाविव वेणुगान निरतौ च भूयास्ताम् ॥

सुनागस्वरं भेरिवाद्यं च शृङ्गं
डफं ढोल कूर्मीं सनायीं पिनाकीं ।
विपंचीं च घन्सद् गणं डिण्डिमं च
शृणु त्वं मधुस्यन्दि चित्रं च वाद्यं ॥ ३ ॥
पत्ये नमः मङ्गळवाद्यानि श्रावयामि ।

(पञ्चचामरवृत्तम्)

दुंदुभिं च झनसवाद्य तित्तिरीं च तुम्बकीं
ढक्कुलीं च घडसवाद्य घर्घरं च कुण्डलीं ।
स्कंबिकां च ढनसवाद्य झर्झरं च ढंसवीं
श्रूयतां सुडमरुकादि वाद्यघोष मद्भुतं ॥ ४ ॥
पत्ये नमः जयवाद्यानि घोषयामि ।

हस्तिकां च कुब्जिकां च लुंबिकां च सेलुकां
स्तम्बिकां च शृङ्गिकां च पालिकां च शुक्तिकं ।

---

॥ वीणानामानि ॥

१ शिवस्यवीणा - लम्बी
२ सरस्वत्याः - कच्छपी
३ नारदस्य - महती
४ तुम्बरोः - कलावती
५ विश्वावसोः - बृहती
६ गणानां - प्रभावती

॥ जातिभेदेन वाद्यानि ॥

ततं वाद्यं तु देवानां गंधर्वाणाञ्च शौषिरम् ।
आनद्धं राक्षसानां तु किन्नराणां घनं विदुः ॥

स्कम्बिकां च लावजां च दर्दुरं च कुञ्जिकां
श्रूयतां श्रुतिप्रियं सुवाद्यमेतदद्भुतम् ॥ ५ ॥

पत्ये नमः कौतुकवाद्यानि श्रावयामि ।

मुरज पटह ढक्का बिंब कोदर्प बुक्का
करट कमठ चुक्का दौण्डिशाना हुडुक्का ।
टुडुकि कुडव झंझा शंखवाद्यं कुडुक्का
टमुकि त्रिवळि भाणः शुष्कलं च शृणुष्व ॥६॥

पत्येनमः शुद्धवाद्यानिश्रावयामि ।

(शार्दूलविक्रीडितम्)

ज्येष्ठा श्रीलघुकिन्ननरीं च कपिला चालावणी वाद्यकं
त्त्रित्रा सच्छतचन्द्रिका च मधुरा चौडुम्बरी ढंसवी ।
शुद्धास्यान्न कुलौष्ठिका च रुचिरं हस्तं गदावारणं
कूर्मी चापि निबद्ध रुद्र त्रिशवी वाद्यं ततं श्रूयताम् ॥

पत्येनमः ततवाद्यानि श्रावयामि ।

---

॥ ततलक्षणम् ॥

आलावणी ब्रह्मवीणा किन्नरी लघुकिन्नरी ।
विपंची वल्लकी ज्येष्ठा चित्रा ज्योषावती जया ॥
हस्तिका कुब्जिका कूर्मी शारंगी परिवादिनी ।
त्रिशवी शतचन्द्री च नकुलौष्ठी च ढंसवी ॥

(आर्यावृत्तम्)

करतालं कांस्यबलं जयघंटां च शुक्तिकावाद्यं
मंजीरं पटवाद्यं पट्टातोघं च घर्घरं वाद्यं।
झंझातालं कर्तरि उंकर घनादिकं वाद्यं
द्वादशसंख्यं सर्वं श्रुत्वानन्दयकंबिकायुक्तं च ॥

पत्येनमः घनवाद्यानि श्रावयामि।
जयघण्टां च वादयामि।
नानाविधवाद्यानि श्रावयामि।

दारुज शंखज लोहज वंशज गेयादि पंचविधं वाद्यं।
श्रृणु पंचमहावाद्यं शुभदं पांचभौतिकं दिव्यं ॥

॥ लीला शुकः ॥

लीलाशुकं ते कलमालपन्तं
विनोदयन्तं भगवत्कथाभिः।

---

औडंबरी पिनाकी च निबंधः शुष्कलस्तथा।
गदावारणहस्तश्च रुद्रोऽथ शरमंडलः ॥
कपिलासो मधुस्यंदीघोणेत्यादि ततं भवेत् ॥

॥ घनलक्षणम् ॥

अनुरक्तं विरक्तं च द्विविधं घन वाद्यकं।
गीतानुगमनं रक्तं विरक्तं ताल संश्रयं ॥
भेरीं मृदंग मुरज पणवानक गोमुखाः।
ढक्का जर्झर निस्साण वाद्यभेदास्त्वनेकाः ॥

विचक्षणं भूषण भूषिताङ्गं
भक्त्या करे नाथ समर्पयामि ॥

पत्येनमः लीलाशुकं समर्पयामि ।

॥ आंदोळिका ॥

ऊढां सुन्दरयोषाभिः नवरत्नमयीं वरां ।
आंदोळिकामर्पयामि आरोह त्वं दयानिधे ॥

पत्ये नमः आंदोळिकामारोहयामि ।

*॥ शिबिका ॥

पट्टवस्त्र परीधाना स्वर्णाच्छादनसंयुता ।
शिबिकारुह्यतां नाथ कौशेयास्तरणा शुभा ॥

पत्ये नमः शिबिकां समर्पयामि ।

---

॥ शुकः मञ्जुपाठः ॥

प्रकटयति रागमधिकं लपनमिदं वक्रिभाणमावहति ॥

॥ शुकस्य शुभसूचकत्वम् ॥

वामः पठम् राजशुकः प्रयाणे शुभं भवेद्दक्षिणतः प्रवेशे ।
वने चराः काष्ठशुकाः प्रयातुः स्युः सिद्धिदाः संमुखमापतन्तः ॥

(वसन्तराजशाकुने सर्ग ८)

(सुरक्ततुण्डः प्रियदर्शनश्च सुमंजुपाठश्च सुदाडिमी प्रियः ॥)

* Gold Palanquin.

नार्याः पतिव्रतायास्तु पतिरेवेश्वरोमतः ।
अतस्तमेवसेवेत भक्त्येश्वरमिवादरात् ॥



मल्लीभिर्ललना प्रियैश्चपरिकैः मुक्ताफलैः कल्पितं ।
पुष्पान्दोलनमम्बुजैर्विलसितं भक्त्याप्रभो स्वीकुरु ॥

देवेभ्योपिहि पूज्यस्तु स्वगुरुर्ब्रह्मचारिणां ।
स्त्रियश्च स्वं च भर्त्तारमृते पूज्यं न दैवतम् ॥



वाह्याश्वोऽनिलवेगोऽयं रत्नकाञ्चन भूषणः ।
आरुह्यतां समञ्जीरः पट्टपल्याण भासुरः ॥

पतिर्बन्धुर्गतिर्भर्ता दैवतं कुलयोषितः ।

सर्वस्माच्चपरः स्वामी न गुरुः स्वामिनः परः ॥



हस्तिपांकुश संयुक्तः कर्णलंबित चामरः ।

मंदे भस्ते मुदे भूया दुदागोऽयं सदाशिवः ॥

कामैरुच्चावचैः साध्वी प्रश्रयेणदमेनच ।
वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम्



तारकत्वरितोपेत चतुस्तुरगयोजितं ।
उत्तमं रथमारुह्य कुरुपूर्णं मनोरथम् ॥

॥ अश्वारोहणम् ॥

सदेवमाणि सुश्रीदः कण्ठाभरण भूषितः ।
पंचधारानाद्द्यचणः पञ्चकल्याणलक्षणः ॥
वाहाश्वोनिलवेगोयं रत्नकाञ्चन भूषणः ।
आरुह्यतां समंजीरः पट्टपल्याणभासुरः ॥
पत्येनमः अश्वमारोहयामि ।

॥ गजारोहणम् ॥

ऐरावणो रणद्धण्टः क्वणत्किङ्किणिकन्धरः ।
कौशेयास्तरणास्तीर्णो लसत्स्वर्णवरण्डकः ॥
हस्तिपांकुशसंयुक्तः कर्णलम्बितचामरः ।
मदेभस्ते मुदे भूयादुदारोयं सदाशिवः ॥
पत्ये नमः ऐरावतादि गजमारोहयामि ।

॥ रथारोहणम् ॥

तारक त्वरितोपेतश्चतुस्तुरगयोजितं
चतुश्चक्रयुतं पुष्परथं ध्वजविराजितं ।

---

॥ अश्वयान ॥

घोटकारोहणं वात पित्ताग्निश्रमक्लमतम् ।
मेदोवर्णकफघ्नं च हितं तद्बलिनां वरम् ॥

॥ हस्तियान ॥

पित्तानिलकरो हस्ती लक्ष्म्यायुः पुष्टिवर्धनः ।

ससारथिं सुवर्णेन चित्रितं समलंकृतम् ।
उत्तमं रथमारुह्य कुरु पूर्णं मनोरथम् ॥

पत्ये नमः रथमारोहयामि ।

॥ नानारथ समर्पणम् ॥

क्रीडापुष्परथं तथाध्वरथकं याने शतांगरथं
युद्धे चक्ररथं च योग्यसुरथं कर्णीरथं श्रीरथम् ।
देवार्थे च मरुद्रथं प्रवहणं स्यात् गर्भकं स्यन्दनं
प्राप्यैतान् बहुशोभमान सुरथानारुह्य संतुष्यतां ॥

पत्ये नमः नानादिव्य रथारोहणं समर्पयामि ।

* व्योमयानम् ( डयनारोहणम् )

आकाशसञ्चारि सुरम्यवाहनं
गन्धर्वदेवैरतिविस्मितं च ।
पुष्पाद्यलंकारयुतं सुशोभितं
सुवर्ण डयनं च समर्पयामि ॥

पत्ये नमः डयनारोहणं समर्पयामि ।
ध्वजं समर्पयामि । पताकाञ्च समर्पयामि ।

---

* Æroplane.

स्नानं च सर्वतीर्थेषु सर्वयज्ञेषु दीक्षणम् ।
प्रदक्षिणं पृथिव्याश्च सर्वाणि च तपांसि च
सर्वाण्येव व्रतानीति महादानानि यानि च ।



उपासनानि पुण्यानि यान्यन्यानि च विश्वतः ।
गुरुसेवा विप्रसेवा देवसेवादिकं च यत् ।
स्वामिनः पादसेवायाः कलां नार्हन्ति षोडशीं ॥

॥ पादसंवाहनम् ॥

आराधितोसि विविधै रुपचारसङ्घैः
संवीजितोसि व्यजनैरपि चामराद्यैः ।
अङ्के निधाय मम नाथ यथासुखं भो
संवाहयामि चरणौ तव पद्मताम्रौ ॥
पत्ये नमः पादौ संवाहयामि ।

॥ पादुके ॥

सुरत्नयंत्रिके रम्ये पादुके हेमभूषिते ।
अर्पिते चार्यपादाभ्यां अधिरोह कृपानिधे ॥
पत्ये नमः पादुके समर्पयामि ।
पत्ये नमः समस्त राजोपचारान् समर्पयामि ।

॥ पतिप्रार्थनापञ्चकम् (भुजङ्गप्रयातवृत्तं) ॥

गळे रत्नहारं करे पारिहार्यं
स्रजं पुष्पमालाञ्च गुच्छं वहन्तम् ।

---

॥ पादुकाप्रयोजनम् ॥

पादुकारोहणं कुर्यात् पूर्वं भोजनतः परम् ।
पादरोगहरं वृष्यं चक्षुष्यं चायुषे हितम् ॥

॥ गुरुचरणारविन्द महिम्नस्तोत्रम् ॥

तत्र नाथ चरणारविन्दयोः कुंकुमा सवझरी मरन्दयोः ।
द्वन्द्वमिन्दु मकरन्द शीतलं मानसं स्मरति मंगलास्पदम् ॥

(रुद्रयामले गुरुपादुका स्तोत्रे)

सदा भूषिताङ्गं स्वयं सुन्दराङ्गं
पतिं देवरूपं गुरुं त्वां भजामि ॥ ॥ १ ॥

मुखेवेदमन्त्रं वरं हीरपुण्ड्रं
श्रुतौ कुण्डलं वज्रलोलं सुगन्धं ।
भुजे चाङ्गदं नागभूषां वहन्तं
पतिं देवरूपं गुरुं त्वां भजामि ॥ २ ॥

सुमुक्तायुतं यज्ञसूत्रं किरीटं
विचित्रोत्तरीयं च वज्रांगुळीयं ।
कटौ मेखलां स्वर्णवस्त्रं धरन्तं
पतिं देवरूपं गुरुं त्वां भजामि ॥ ३ ॥

वृतं ब्राह्मणैर्वेदघोषानुरक्तं
स्फुरद्दीप्तिमन्तं हुताशं यजन्तं ।

---

॥ शिवप्रार्थना ॥

गळे यस्य नीलं करे यस्य शूलं किरीटे निशीशो ललाटे हुताशो ।
भुजे भोगिराजो वयं तस्य धन्याः भजामो भजामो भजामो भजामः ॥
उमा यस्य वामे मुखे यस्य नेत्रं शिरस्यभ्रगंगा सदा भस्म जालं ।
तनौ कामिनी यस्य तत्तुल्यदैवं न जाने न जाने न जाने न जाने ॥
अकण्ठे कळङ्का दनंगे भुजङ्गा दपाणौ कपालादफाले नलाक्षा ।
दवामे कळत्रा दमौळौ शशाङ्का दहं दैव मन्यं न मन्ये न मन्ये ॥
(शिवत्वेन पतिं ध्यात्वा पूजयेद्दिव्यनामभिः ॥)

यापतिं हरिभावेन भजेच्छ्रीरिवतत्परा ।
हर्यात्मना हरेर्लोके पत्याश्रीरिवमोदते ॥



गलेरत्नहारं करेपारिहार्यं स्रजं पुष्पमालां च गुच्छं वहंतं

सदा वासुदेवं भजन्तं महान्तं
पतिं देवरूपं गुरुं त्वां भजामि ॥ ४ ॥

भुवि ख्यातिमन्तं महाभाग्यवन्तं
सुगोविन्दनाम्ना प्रतीतं स्मरन्तं ।
सुभद्रापतिं राधिकाप्राणनाथं
पतिं देवरूपं गुरुं त्वां भजामि ॥ ५ ॥

॥ कृतपूजानिवेदनम् ॥

पतिव्रतास्वरुंधत्या सावित्र्याप्यनसूयया ।
शाण्डिल्यया चंद्रमत्या लक्ष्म्या च शतरूपया ॥

मेनया च सुनीत्या च संज्ञया स्वाहया यथा ।
पूजिताः स्वस्वभर्तारः तथा त्वाहमपूजयम् ॥

नमस्तुभ्यं प्राणनाथ सतीप्राणपरायण ।
ईप्सितं मे वरं देहि परत्र च परां गतिं ॥

॥ क्षमापणम् ॥

क्षमस्व पत्नीपरदेवते त्वं
ममापराधान् गृहकृत्यजातान् ।
भक्तिं मदीयां सफलां कुरुष्व
संप्रार्थये नाथ नमोनमस्ते ॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवण नयनजं वा मानसं वाऽपराधं ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे क्षमहि मां प्राणनाथ ॥

॥ अर्पणम् ॥

पतिर्बन्धुर्गतिर्भर्ता दैवतं कुलयोषितः।
सर्वस्माच्च परः स्वामी न गुरु स्स्वामिनः परः ॥

सर्वदेवमयस्वामी सर्ववेदमयश्शुचिः।
सर्वपुण्यस्वरूपश्च पतिरूपी जनार्दनः ॥

अनया पूजया नित्यं तृप्तोभवतु मानदः ।
अष्टोत्तरशतेन त्वां तीर्थाना मभिषिच्य च ॥

पुष्पाण्यष्टोत्तरशतं भूषाश्चाष्टोत्तरंशतं ।
भक्ष्याण्यष्टोत्तरशतं फलान्यष्टोत्तरं शतं ॥

---

॥ पत्यर्पणम् ॥

कायेन मनसा वाचा सर्वदा प्रियकर्मभिः ।
या प्रीणयति भर्तारं सैव ब्रह्मपदं लभेत् ॥

॥ कृष्णार्पणम् ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ (भ. गीता अ. ६)

॥ सर्वं श्रीकृष्णार्पणमस्तु ॥

वाद्यान्यष्टोत्तरशतं नाद्यान्यष्टोत्तरंशतं ।
एभिरष्टोत्तरैर्नाम्नामष्टोत्तरशतेन च ।
भक्त्या मया कृतां पूजां स्वीकृत्य वरदोभव ॥

अनेन यथाशक्ति यथाप्रज्ञं यथामिळितोपचार-द्रव्यं मया कृतेन सर्वसौभाग्यसौमङ्गल्यप्रदायकेन पति-पूजनेन महाविष्णुस्वरूपी पतिदेवः प्रीयतां ॥

मम पतिदेवता सुप्रीता सुप्रसन्ना वरदा भवतु ।
इति साक्षतं जलं भूमौ विसृजेत् ।

॥ पतिमहिमानुसंधानम् ॥

नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखं ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥
पति र्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः ।
पत्युस्समा गतिर्नास्ति दैवतं वा यथा पतिः ॥

*॥ तीर्थग्रहणम् ॥

पतिपादोदकं पुण्यं सर्वतीर्थफलप्रदं ।
सर्वसंपत्प्रदं दिव्यं सर्वपापहरं शुभम् ॥

---

*॥ पतिपादोदकमहिमा ॥

तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।
शङ्करादपि विष्णोर्वा पतिरेवाधिकः स्त्रियाः ॥

आयुः प्रजां धनं धान्यं सर्वसौभाग्यवर्धनं ।
मंगळं सततं स्त्रीणां महाभाग्यं शुभं शुभं ॥

इतिमन्त्रैः त्रिवारं पतिपादथीर्तं पिबेत् ।

॥ इति पतिपूजा प्रयोगस्समाप्तः ॥

---

तीर्थार्थिनी सदा नारी पतिपादोदकं पिबेत् ।
तेन कर्म विपाकेन सर्वतीर्थ फलं लभेत् ॥

न दानै श्शुध्यते नारी उपवासशतैरपि ।
न तीर्थ सेवया तद्वत् भर्तुः पादोदकैर्यथा ॥

॥ तीर्थग्रहणविधिः ॥

अत्रिरुवाच

मन्त्रेण पादयोर्दत्तं आधानं पाद्यमुच्यते ।
तत्पाद्य तीर्थमादाय शिरसि प्रोक्षयेत्पिबेत् ॥

॥ तीर्थग्रहणप्रकारः ॥

वस्त्रं चतुर्गुणं कृत्वा पाणौ पाणिं निवेश्य च ।
पाणौ तीर्थं प्रतिष्ठाप्य त्रिःपिबेद्बिन्दु वर्जितम् ॥

॥ स्वशरीरज तीर्थानि ॥

मनो विशुद्धं पुंरुषस्य तीर्थं वाचां तथा चेंद्रिय निग्रहश्च ।
एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति ॥

॥ मानसतीर्थ महिमा ॥

श्रृणु तीर्थानि गदतो मानसानि समानघे ।
येषु सम्यक् नरस्स्नात्वां प्रयाति परमां गतिं ॥

## ॥ पतिदेवनिरूपणम् ॥

सत्यंमाता पिताज्ञानं धर्मोभ्राता दयासखी ।
शांतिः कन्या क्षमापुत्रो पतिर्देवो ममस्मृतः ॥

## ॥ श्रीविष्णुपादोदकतीर्थग्रहण मंत्रः ॥

अकालमृत्युहरणं सर्वव्याधि निवारणं ।
समस्तपापक्षयकरं श्रीविष्णुपादोदकं शुभम् ॥

## ॥ श्रीविष्णुपादोदक तीर्थग्रहणमंत्रः ॥

( शार्दूलविक्रीडितम् )

गंगा पुष्कर नर्मदा च यमुना गोदावरी गोमती
तुंगा द्वारवती प्रयाग बदरी वाराणसी सिंधुभिः ।
कन्या सेतु सरस्वती प्रभृतिभिः ब्रह्माण्ड मध्ये जले
तीर्थस्नान मनन्तकोटि फलदं श्रीविष्णु पादोदकम् ॥ (ब्रह्माण्डपुराणे)

## ॥ श्रीविष्णुतीर्थग्रहणस्य त्रिविधं फलम् ॥

शातातप उवाच
अविद्या मूलनाशाय जन्मकर्म निवृत्तये ।
ज्ञानवैराग्य सिध्यर्थं विष्णोः पादोदकं पिबेत् ।

## ॥ दक्षिणामूर्तिदत्तात्रेयादि गुरुपादतीर्थमहिमा ॥

अविद्या मूलशमनं सर्वपाप प्रणाशनम् ।
गुरोः पादोदकं दिव्यं पुत्रपौत्र प्रवर्धनम् ॥

॥ श्रीः ॥

# ॥ सुभद्रापञ्चरत्नम् ॥

श्री वाणी धरणी महेशरमणी
पूजापुरस्कारिणी
भर्तुः पूजनकारिणी सुनितरां
सुश्रूषया तोषिणी ।
कान्तं दैवतमानिनी गुणगण
श्रेणी मनोहारिणी
पूनापुर्यवतारिणी विजयते
देवी सुभद्रामणी(णिः) ॥१॥

---

१. शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधको नहि सर्वत्र चंदनं न वने वने ॥

२. काचिदेव हि जानाति महासाध्वी च स्वामिनं ।
अतिसद्वंश जाता च सुशीला कुलपालिका ॥

३. अनुकूलां विमलांगीं कुलजां कुशलां सुशीलसंपन्नाम्
पंचलकारां भार्यां पुरुषः पुण्यो दयाल्लभते ।

४. यावत्स्वलोमसंख्यास्ति तावत्कोट्ययुतानि च
भर्ता स्वर्गसुखं भुङ्क्ते रममाणा पतिव्रता ॥

श्रीमती सौभाग्यवती सुभद्राबाइ देवी ।



धन्या सा जननी लोके धन्योऽसौ जनकः पुनः ।
धन्यस्स च पतिः श्रीमान् येषां गेहे पतिव्रता ॥

देवेभ्योपिहि पूज्यमेव नितरां
भर्तारमाराधिनी
तत्पादोदकपायिनी प्रतिदिनं
संसेविनी नंदिनी ।
भर्त्राज्ञा परिपालिनी सुकुलिनी
पुण्या सुशीलामणी(णिः)
मद्रास्पत्तनवासिनी विमलिनी
भद्रा सुभद्रामणी(णिः) ॥२॥

सद्धर्माचरणी पतिप्रियमणी
मांगल्य संपन्मणी(णिः)
पातिव्रत्य विभूषिणी कुलमणी
वंशत्रयोद्धारिणी ।
सन्तानादिसमृद्धिनी सुजननी
सौभाग्य चूडामणी(णिः)
लाड्गोविन्दपदारविन्दरमणी
देवी सुभद्रामणी(णिः) ॥३॥

---

श्रीभगवानुवाच

५. देवता प्रतिमा दर्शात् तीर्थस्नायीभवेन्नरः ।
सूर्यस्य दर्शने भक्त्या सतीनां दर्शने तथा ॥

(श्रीमद्भागवते १-६-३४)

इन्द्राणी मनुकारिणी सुगुणिनी
सौजन्यशान्तामणी(णिः)
कल्याणी मृदुभाषिणी गृहमणी
कान्तामणी धीमणी(णिः)।
*जातीचंपकरत्नभूषणमणी
मुक्तामणी हारिणी
लाड्गोविन्दसखीमणी सुगृहिणी
भद्रा सुभद्रामणी(णिः) ॥४॥

वैदेहीदमयन्त्यरुन्धतिरमा
गौरी समाचारिणी
पूजाकल्पमणि प्रचारकमणी
लोकोपकाराग्रणी।
पुण्यश्लोक सतीमणी गुणमणी
साध्वीमणीनां मणी(णिः)
लाड्गोविन्दविहारिणी विजयते
धन्या सुभद्रामणी(णिः) ॥५॥

---

श्रीमहालक्ष्मी उवाच

६. तुष्टा च धीरा प्रियवादिनी च सौभाग्य युक्ता च सुशोभना
लावण्य युक्ता प्रियदर्शना च पतिव्रताया च वसामितासु ॥

* जाती हीरक हारिणीश्वरपुरेशानी सुराज्ञीमणी(णिः)

यस्य भार्या शुचिर्दक्षा भर्त्तारमनुगामिनी

नित्यं मधुरवक्त्री च सारमानरमारमा ॥



ममव्रते ते हृदयंदधामि ममचित्तमनुचित्तं ते अस्तु ।

ममवाचमेकमना जुषस्व प्रजापतिस्त्वा नियुनक्तुमह्यं ॥

॥ भार्यासूक्तम् ॥

भार्यामूलं गृहस्थस्य भार्यामूलं सुखस्य च ।
भार्या धर्मफलावाप्त्यै भार्या सन्तानवृद्धये ॥

भार्यां विना न धर्मोऽस्ति नार्थकामौ विशेषतः ।
धर्मकामार्थ कार्येषु भार्या पुंसः सहायिनी ॥

नास्ति भार्या समोबन्धुः नास्ति भार्या समंसुखं ।
नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजं ॥

अर्धभार्या मनुष्यस्य भार्याश्रेष्ठतमः सखा ।
भार्यामूलं त्रिवर्गस्य भार्यामूलं तरिष्यतः ॥

यस्य भार्या गृहे नास्ति सापिचेत्प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहं ॥

सा भार्या या गृहे दक्षा सा भार्या या प्रियंवदा ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥

यस्य भार्या शुचिर्दक्षा भर्तारमनुगामिमी ।
नित्यं मधुरवक्त्री च सा रमा न रमा रमा ।

यस्य भार्या गुणज्ञा च भर्तारमनुगच्छति ।
अल्पाल्पेन तु संतुष्टा सा प्रिया न प्रिया प्रिया ॥

अनुकूला न वाग्दुष्टा दक्षा साध्वी पतिव्रता ।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥

यदा यदा जगत्स्वामी देवदेवो जनार्दनः ।
अवतारं करोत्येषः तदा श्रीस्तत्सहायिनी ॥

यदा च भार्गवो रामः तदा भूद्धरणीस्त्वियं ।
राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषाऽनपायिनी ॥

॥ सुवासिनीपूजा ॥

॥ महापतिव्रताध्यानम् ॥

लक्ष्मी गौरी शची सीता सावित्री च सरस्वती ।
अरुन्धती सुकन्या च लोपामुद्रा सुवर्चला ॥
रोहिणी मदयन्ती च दमयन्ती च केशिनी ।
श्रीमत्यादि महाभागाः सर्वा मंगळदायकाः ॥

---

॥ पतिव्रतानामानि ॥

१. सूर्यस्य सुवर्चला. २. शक्रस्य शची. ३. वशिष्ठस्य अरुन्धती. ४. चन्द्रस्य रोहिणी. ५. अगस्त्यस्य लोपामुद्रा. ६. च्यवनस्य सुकन्या. ७. सत्यवतः सावित्री. ८. कपिलस्य श्रीमती. ९. सौदासस्य मदयन्ती. १०. सगरस्य केशिनी. ११. नलस्य दमयन्ती. १२. रामस्य सीता. १३. शिवस्य सती. १४. नारायणस्य लक्ष्मीः. १५. ब्रह्मणः सावित्री. १६. रावणस्य मन्दोदरी । इति पुराणान्तरम् ॥

महापतिव्रता एताः ध्यात्वा सर्व सुमंगलीः ।
लाड्गोविन्दस्य दयिता सुभद्रानामसंयुता ।
सुवासिनीनां पूजां च करिष्यामि शुभावहां ॥

॥ इति महापतिव्रता ध्यायेत् ॥

सुवासिनीभ्यो नमः

देहलेपनार्थमिदं सौमंगल्यप्रदं हरिद्राचूर्णम् ।
ललाटभूषणार्थं स्थासकार्थं इदं कुंकुमं ।
परिधानार्थं इदं वस्त्रं । इदं कञ्चुकं ।
मंगळसूत्र ताटंकादीनि ।
लेपनार्थं अयं परिमळगन्धः ।
इयं पुष्पस्रक् । इयं पुष्पमाला । इमानि पुष्पाणि ।
हरिद्रां कुंकुमं चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकं च ताम्बूलं ताटंकं कंठसूत्रकम् ॥
नासिकाभरणं काचवलयं पुष्पशेखरं ।
पादांगुळीयकं चेति मांगल्याभरणानि वै ।
द्वादशैतानि सौभाग्यद्रव्याणि प्रददाम्यहम् ॥

---

॥ सद्गुणभूषणानि ॥

शीलं लज्जा च माधुर्यं दृढता आर्जवं तथा ।
पवित्रता च सन्तोषः सौहृदं विनयक्षमा ।
शुचिता पतिशुश्रूषा भूषा द्वादशसंस्मृताः ॥

॥ महापतिव्रतार्चना ॥

१. श्रीमहालक्ष्म्यै नमः
२. श्रीगौर्यै नमः
३. श्रीशच्यै नमः
४. श्रीसीतायै नमः
५. श्रीसावित्र्यै नमः
६. श्रीसरस्वत्यै नमः
७. श्रीअरुन्धत्यै नमः
८. श्रीसुकन्यायै नमः
९. श्रीलोपामुद्रायै नमः
१०. श्रीसुवर्चलायै नमः
११. श्रीरोहिण्यै नमः
१२. श्रीमदयन्त्यै नमः
१३. श्रीदमयन्त्यै नमः
१४. श्रीकेशिन्यै नमः
१५. श्री श्रीमत्यै नमः
१६. श्रीकात्यायन्यै नमः
१७. श्रीशिवायै नमः
१८. श्रीसत्यै नमः
१९. श्रीगायत्र्यै नमः

२०. श्री अनसूयायै नमः
२१. श्रीशाण्डिल्यै नमः
२२. श्रीचन्द्रमत्यै नमः
२३. श्रीशतरूपायै नमः
२४. श्रीमेनायै नमः
२५. श्रीसुनीत्यै नमः
२६. श्रीसंज्ञायै नमः
२७. श्रीस्वाहायै नमः
२८. श्रीसर्वमङ्गळायै नमः
२९. सुवासिन्यर्चनप्रीतायै श्रीललितायै नमः ।

इति महापतिव्रताः नमस्कृत्य—

"सुवासिनीभ्यो दास्यामि वायनानि प्रसीदत"

इति वायनदानं कुर्यात् ।

इदं फलं मया दत्तं पुत्रपौत्राभिवृद्धये ।
देहि पूर्णफलं देवि कृपां कुरु शिवे मयि ॥

तांबूलादि समायुक्तं नागवल्लीदळैर्युतं ।
सदक्षिणाकं दास्यामि मंगळांबा प्रसीदतु ॥

प्रार्थना

पुत्रान् देहि धनं देहि सौभाग्यं सर्वमंगळे ।
सौमंगल्यं सुखं ज्ञानं देहि मे शिवसुन्दरी ॥

सुमंगलीभ्यो नमः सर्वोपचारान् समर्पयामि ॥

इदं फलं सदक्षिणाकं तांबूलं च सकलाराधनैः शोभनमस्तु ।

तथास्तु—इति सुवासिनीनां प्रतिवचनम् ॥

## ॥ आशीर्वादमन्त्राः ॥

॥ भर्तुः पत्नीम्प्रत्याशीर्वादमन्त्रः ॥

ध्रुवैधि पोष्या मयि मह्यं त्वा दाद्बृहस्पतिः
मया पत्या । प्रजावती संजीव शरदश्शतम् ॥

एकाग्निकाण्डे १–४.

॥ दीर्घसौमङ्गल्यप्रद आशीर्वादमन्त्रः ॥

सुमङ्गलीरियं वधूरिमागंसमेतपश्यत ।
सौभाग्य मस्यै दत्वायाथास्तं विपरेतन ॥

एकाग्निकाण्डे १–९.

॥ ब्राह्मणानामाशीर्वादः ॥

॥ आशीर्वादपंचकम् ॥

लक्ष्मी स्ते सदने सदा विहरतां वित्ते च चिंतामणिः
स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव ।
वाणी ते वदने दयानयनयो र्दानं करेचान्वहं
विष्णुश्चेतसि ते मतिश्चवसतां कीर्तिश्च लोकद्वये ॥१॥

कल्याणानि दिवामणिः सुललितां कांतिं कलानां निधिः
लक्ष्मीः क्ष्मातनयो बुधश्च बुधतां जीवश्चिरंजीवितां ।
साम्राज्यं भृगुजोऽर्कजोविजयितां राहुर्बलोत्कर्षतां
केतुर्यच्छतु सर्ववांछित फलं गोविन्दनाम्नेमुदा ॥२॥

यावद्वीचीतरंगैः वहतिसुरनदीजाह्नवी पुण्यतोया
यावच्चाकाशमार्गे अटति सुरवरो भास्करो लोकपालः ।
यावद्वज्रेन्द्रनील स्फटिकमणि शिलावर्तते मेरुशृङ्गे
तावत्त्वं पुत्रपौत्रैः स्वजनपरिवृतो जीव* शंभोः प्रसादात्॥

निवसतु तव देहे सर्वदा धैर्यलक्ष्मी
प्रविशतु भुजदंडे चंडिकावैरिहन्त्री ।
विलसतु तव गेहे धर्मपत्नी सुसेवा
नचलतु तव चित्तं पादपद्मान्मुरारेः ॥४॥

---

* विष्णोः

स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु
गोवाजिहस्ति धनधान्यसमृद्धिरस्तु ।
ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोस्तु
वंशे सदैव भवतां हरि भक्तिरस्तु ॥५॥

॥ ब्राह्मणानामाशीर्वादमन्त्राः ॥

अस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाम मश्नुतः । पुमान् पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः ॥

आशीर्दाया दम्पती वाम मश्नुता मरिष्टो राय स्सचतागं समोकसा । य आसिच त्संदुग्धं कुंभ्या सहेष्टेन याम न्नमतिं जहातु सः ॥

सर्पिर्ग्रीवी पीवर्यस्यजाया पीवानः पुत्राअकृशासो अस्य । सहजानिर्यस्सुमखस्यमानइंद्रायाऽऽशिरगंसह कुम्भ्यादात् ॥

आशीर्मऊर्जमुत सुप्रजास्त्वमिषन्दधातुद्रविणगं सवर्च-
सम् । संजयन् क्षेत्राणिसहंसाहमिन्द्रकृण्वानो अन्यागंअध-
रान्त्सपत्नान् ॥

तै-सं. ३–२.

आशिर्षमेवैतामाशास्ते पूर्णपात्रे । अन्ततोनुष्टुभा । चतुष्पद्वाएतच्छन्दः प्रतिष्ठितं पत्न्यै पूर्णपात्रे भवति । अस्मिन् लोके प्रतितिष्ठानीति । अस्मिन्नेवलोके प्रतितिष्टति ॥

अथोवाग्वा अनुष्टुक् । वाङ्मिथुनं-आपोरेतः प्रजननं । एतस्माद्वैमिथुनाद्विद्योतमानस्स्तनयन्वर्षति । रेतस्सिञ्चन् । प्रजाः प्रजनयन् - यद्वै यज्ञस्य ब्रह्मणा युज्यते । ब्रह्मणा वैतस्य विमोकः । अद्भिश्शान्तिः । विमुक्तं वा एतर्हियोक्त्रं ब्रह्मणा । आदायैनत्पत्नी सहाप उपगृह्णीते शान्त्यै - अंजलौ पूर्णपात्र मानयति । रेत एवास्यां प्रजां द धधाति । प्रजयाहि मनुष्यः । पूर्णःमुखंविमृष्टे । अवभृथस्यैवरूपं कृत्वोत्तिष्टति । गोमृगकंठेन प्रथमामाहुतिं जु होति । पशवोवै गोमृगः । रुद्रोग्निस्स्विष्टकृत् । रुद्रादेवपशूनन्तर्दधाति । अथोयत्रैषाहुति-र्हूयते । नतत्ररुद्रःपशूनभिमन्यते । अश्वशफेन द्वितीयामा-हुतिं जु होति । पशवोवाएकशफं । रुद्रोग्निस्स्विष्टकृत् । रुद्रा

देव पशूनन्तर्दधाति। अथोयत्रैषाहुति र्हूयते। नतत्ररुद्रः पशू-नभिर्मन्यते ।

अयस्मयेन कमंडलुना तृतीयां। आहुतिं जुहोत्यायास्योवैप्रजाः। रुद्रोग्निस्विष्टकृत्। रुद्रादेवप्रजा अन्तर्दधाति। अथो यत्रैषाहुति र्हूयते। न तत्र रुद्रः प्रजा अभिर्मन्यते ॥

अपश्यं त्वा मनसा चेकितानं तपसोजातं तपसो विभूतं। इह प्रजामिहरयिंर्रराणः प्रजायस्व प्रजया पुत्रकाम।

अपश्यं त्वा मनसा दीध्यानाग् स्वायान्तनूगँ ऋत्वि जेनाथमानाम् उपमामुच्यायुवतिर्बभूयाः प्रजायस्वप्रजया पुत्र कामे। सहस्रमाख्यात्रेदद्याच्छतं प्रतिगरित्रएते चै वासने। श्वेतश्वाश्वतरीरथोहोतुः पुत्रकामाहाप्याख्यापयेरन्। लभन्तेह-पुत्रान् लभन्तेहपुत्रान् ॥

सर्वस्याप्त्यै सर्वस्याधित्यै सर्वमेवतेनाप्नोति सर्व-जयति ॥

प्रजायां आभ्यां प्रजापत इंद्राग्नी शर्म यच्छतम् ।
यथैनयो र्न प्रमीयातां उभयो र्जीवतोःप्रजाः ॥
तेन भूतेन हविषा य माप्यायतां पुनः ।
जायां या मस्मा आवाक्षु स्ताग् रसेनाभिवर्धताम् ॥

अद्वैतं सुखदुःखयो रनुगतं सर्वास्ववस्था सुयद्वि
श्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्योरसः ॥



त्वष्टा जायामजनयत् त्वष्टास्यै त्वां पतिं।
त्वष्टा सहस्रमायूं षि दीर्घमायुः कृणोतुवाम् ॥

अभिर्वर्धतां पयसा भिराष्ट्रेण वर्धतां ।
रय्या सहस्रपोषसेमौ स्ता मनपेक्षितौ ॥
त्वष्टा जाया मजनय त्त्वष्टास्यैत्वां पतिम् ।
त्वष्टा सहस्र मायूंषि दीर्घमायुः कृणोतु वां ॥

एकाग्निकाण्डे.

अविधवाभववर्षाणि शतंसाग्रंचसुव्रता ।
तेजस्वीचयशस्वीच धर्मपत्नीपतिव्रता ॥
जनयद्बहुपूत्राणिमाचदुःखंलभेःक्वचित् ।
भर्ता तेसोमपानित्यं भवेद्धर्मपरायणः ॥
अष्टपुत्रा भवत्वं च सुभगा च पतिव्रता ।
भर्तुश्चैवपितुर्भ्रातुः हृदयानंदिनीसदा ॥
इन्द्रस्यतुयथेंद्राणी श्रीधरस्य यथाश्रिया ।
शंकरस्य यथागौरी तद्वत्त्वमपिभर्तरि ॥
अत्रेर्यथानसूयास्या द्वसिष्ठस्याप्यरुंधती ।
कौशिकस्य यथासती तद्वत्त्व मपिभर्तरि ॥

## महदाशीर्वादः

स्वस्ति मंत्रार्थास्सत्यास्सफलास्सन्त्विति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

अनयोर्दम्पत्योर्वेदोक्तं दीर्घमायुष्यं भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

शुक्रवारपतिपूजामुहूर्तं स्सुमुहूर्तोऽस्त्विति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

तल्लग्नापेक्षया आदित्यादीनां नवानां ग्रहाणां शुभमानुकूल्यं भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

ये ये ग्रहा श्शुभेतरस्थानेषु स्थिता स्तेषां ग्रहाणां अत्यन्तातिशयितशुभफलप्रदातृत्वासिद्धि र्भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

अद्यानुष्ठिते शुक्रवारपतिपूजामहोत्सवे मंत्रलोपे क्रियालोपे द्रव्यलोपे नियमलोपे सत्यपि सर्वं यथाशास्त्रानुष्ठितं भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

१. इमौदम्पती—आयुष्मन्तौ, कान्तिमन्तौ, शान्तिमन्तौ, दान्तिमन्तौ, क्षान्तिमन्तौ, पुष्टिमन्तौ, तुष्टिमन्तौ, श्रद्धावन्तौ, च भूस्तामितिभवन्तोमहान्तोऽनुगृह्णन्तु । तथास्तु

२. इमौदम्पती—सालङ्कारौ, सदाचारौ, महोदारौ कलाधारौ, शुभागारौ, मणीहारौ, महाधीरौ बहुक्षीरौ, च-भूयास्तामिति भवन्तोमहान्तोऽनुगृह्णन्तु । तथास्तु

३. इमौदम्पती—सुचरित्रौ, सुपवित्रौ, प्रियपुत्रौ, बुधमित्रौ, बहुसत्रौ, पृथुशस्त्रौ, अनमित्रौ, दृढगात्रौ, च भूयास्तामिति भवन्तोमहान्तोऽनुगृह्णन्तु । तथास्तु

४. इमोदम्पती—ओजस्विनौ, तेजस्विनौ, वर्च्चस्विनौ, यशस्विनौ, मेधाविनौ, प्रभाविनौ, अनुभाविनौ, सम्मानिनौ, च भूयास्तामितिभवन्तोमहान्तोऽनुगृह्णन्तु । तथास्तु

५. इमोदम्पती—सज्जनसुमुखौ, दुर्जनविमुखौ, विघटितक्षामौ, सुघटितक्षेमौ, मुखसमसोमौ, निर्जितकामौ, पूजितरामौ, पटुतमसामौ, च भूयास्तामिति भवन्तोमहांतोऽनुगृह्णन्तु । तथास्तु

६. इमौदम्पती—निर्जितमंदारौ, निर्भयसंचारौ, निर्भरश्रृङ्गारौ, मौक्तिकप्रावारौ कमनीयाकारौ, संस्कृतवाग्धारौ, संभृतपरिवारौ, सौभाग्यधुरंधरौ, च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

७. इमौदम्पती—भुवि ख्यातिमन्तौ, पटुज्ञानवन्तौ, बहुप्रीतिमंतौ, स्वयंदीप्तिमंतौ कलासक्तिमंतौ, रमाभक्तिमंतौ, सदाभोगवंतौ, सकलभाग्यवंतौ, च भूयास्तामिति भवन्तोमहान्तोऽनुगृह्णन्तु । तथास्तु

८. इमौदम्पती—सुहृदिप्रेयांसौ, सुमतस्थेयांसौ, स्वजनश्रेयांसौ विनयगरीयांसौ; विबुधवरीयांसौ, विरहदवीयांसौ, विजयपटीयांसौ, तरुणनवीयांसौ, च भूयास्तामिति भवन्तोमहान्तोऽनुगृह्णन्तु । तथास्तु

९. इमौदम्पती—बहुमत कीर्तिमन्तो, अभिमत पूर्तिमंतौ, दृढतम मूर्तिमंतौ, सुवचन स्फूर्तिमंतो, निजमत बुद्धिमंतौ, परिजन ऋद्धिमंतौ, मणिगण सिद्धिमंतौ, गुरुजन भक्तिमंतौ, च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु ।

तथास्तु

१०. इमौदम्पती—जितभयमनोविकारौ, कृतबहु जनोपकारौ, पूजितरमानिवासौ, श्रीजित धनेशवासौ, मणि मयनवतल्पौ, मधुमयानिजजल्पौ, विरचितबहुपुण्यौ, विशिष्ट तमगण्यौ, च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु ।

तथास्तु

११. इमौदम्पती — धरासुदुर्लभ सुराधिनायक चिराभिवांछित पुरारिमानित मुरारिचिरधृत परार्ध्यचंदन वराधिचर्चित जरादिवर्जित निरामयोज्वल विराजितातुल चारुपिंगळमूर्तिकौ भूरिमंगळपूर्तिकौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

१२. इमौदम्पती—पुरोदिङ्मुखा चिरोदितदिवा करोस्रघटना सुरोचितमहा सरोरुहाभा तिरोहितिकृति प्ररोहदक्ष स्वरोचिरुपचित तरोत्तमामृत सरोवरायित सुरोत्तमार्थित करोपमर्दन विरोधिमृदुता स्पदांघ्रिभगत्र त्प्रसादविभव प्रकामतुष्टौ विराजतामिति भवन्तो महान्तोऽनुगृह्णन्तु ।

तथास्तु

१३. इमौदम्पती—धनलक्ष्मी, धान्यलक्ष्मी, धैर्य-लक्ष्मी, जयलक्ष्मी, रत्नलक्ष्मी, राज्यलक्ष्मी, आयुधलक्ष्मी, विद्यालक्ष्मी, अश्वलक्ष्मी, गजलक्ष्मी, गोलक्ष्मी, भूलक्ष्मी, वरलक्ष्मी, वीर्यलक्ष्मी, संपद्लक्ष्मी, महालक्ष्मीकटाक्षवीक्षण-पात्रभूतौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु ।

तथास्तु

१४. इदं मंदिरं—नित्यनटदिंदिरं सोधसममंदरं तुल्यरुचिचंदिरं निकटगतमंदुरं निबिडवरसिंधुरं नंदत्पुरंदरं नित्योत्सवसुंदरं च भूयादितिभवन्तो महान्तोऽनुगृह्णन्तु ।

तथास्तु

१५. इमौदम्पती—अखण्ड भूमण्डलमहासाम्रा-ज्योचित भूचक्रवालश्वेतच्छत्र चामर ध्वजविराजमान अपरिमित धनकनक वस्तुवाहनरथगजतुरगपदाति चतुरङ्ग-बलसंयुत महासाम्राज्यलक्ष्मीकटाक्षवीक्षणपात्रभूतौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

---

## ॥ द्वितीयभागः ॥

---

१. इमा दम्पती—भारती ब्रह्माणाविव—दीर्घायुषौ ।

शची पुरंदराविव—समस्तैश्वर्यसम्पन्नौ ।

अनसूयात्रि तपोधनाविव—पातिव्रत्यसूनृतवादशीलौ ।

जानकी रघुनायकाविव—परपुरुष परदार पराङ्मुखौ ।

अरुंधती वसिष्ठाविव—श्रौतस्मार्त नित्यकर्मानुष्ठान बद्ध-श्रद्धौ ।

सरस्वती चतुराननाविव-(चतुर्वेद) चतुर्दशविद्या स्थान पारंगता ।

मैत्रेयी याज्ञवल्क्याविव—ब्रह्मविद्याविशारदौ ।

लक्ष्मी नारायणाविव—नित्यपरिपूर्णानंदौ ।

च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

२. इमौ दम्पती——

रुक्मिणी श्रीकृष्णाविव—सर्वमोहनसौन्दर्यौ ।

छायामार्ताण्डाविव—निरतिशय दीप्तिमन्तौ ।

रोहिणी चन्द्रमसाविव—परस्परप्रेम सान्द्रमनसा ।

पार्वती परमेश्वराविव—नित्यसमेता ।

रतिमन्मथाविव—विविधविहारलीलालोला ।

"इमौ दंपती" पार्वतीपरमेश्वराविव नित्यसमेतौ ।



लक्ष्मीनारायणाविव पूर्णानन्दौ च भूयास्ताम् ।

यत्रानुकूल्यं दंपत्योः त्रिवर्गस्तत्रवर्तते ॥

अदितिकश्यपाविव–सुशीलायुरारोग्य बहुसत्पुत्रसमेतौ ।

सदारसौभरिवत्–पुत्रपौत्रनप्तृपरम्परा परिवृतपार्श्वौ ।

मेनका हिमाचलाविव–सर्वजनाभिनंदनीयजामातृदुहितरौ ।

च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

३. इमौ दम्पती—

भीष्मप्रह्लादाविव–भगवद्भक्तिभाजनौ ।

कर्णबलिचक्रवर्तिनाविव–कामितार्थपरिदाननिरतौ ।

स्कन्दमारुताविव–बलाढ्यौ ।

पार्थककुत्स्थाविव–अप्रतिम पराक्रमशालिनौ ।

विश्वामित्रकुंभसंभवाविव–विश्वातीताश्चर्यनिलयौ ।

मान्धातृभगीरथाविव–मानातीत कीर्तिमन्तौ ।

सागररामचंद्राविव–गांभीर्यैकनिकेतनौ ।

यक्षाध्यक्षसहस्राक्षाविव–अक्षीयमाण लक्ष्मीकटाक्षवीक्षण पात्रभूतौ ।

च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

४. इमौ दम्पती—

धन्वन्तर्यश्विनीदेवाइव–आयुर्वेदपर्याप्तपरिचयौ ।

द्रोणपरशुरामाविव–ब्रह्मपाशुपतनारायणाद्यस्त्रमुक्त

अमुक्त मुक्तामुक्त यन्त्रमुक्तरूप चतुर्विधशास्त्र विद्यावबोधकधनुर्वेद धुरन्धरौ ।

कश्यपसदाशिवाविव—सप्तस्वरसंयुतानेक रागतालालंकृत गान्धर्ववेद विशारदौ ।

तुम्बुरुनारदाविव—वीणागानप्रवीणौ ।

भरतनन्दिकेश्वराविव—नृत्यताण्डव लास्याभिनयादि बोधक नाट्यशास्त्र परिज्ञानवन्तौ ।

विश्वावसु वेणुगोपालाविव—वेणुगानानिरतौ ।

च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

५. इमौ दम्पती—

मनु पराशराविव—धर्मशास्त्रविचक्षणौ ।

शुक्रचाणक्याविव—शक्तित्रय सिद्धित्रय भेदत्रय दण्डत्रय सामपंचक दानपंचक यानपंचक मंत्रपंचक राज्यसप्तांगसभासप्ताङ्गादि संयुतार्थशास्त्र समर्थौ ।

नकुल शालिहोत्राविव—रेवन्तोत्तरहय लीलावत्याद्यश्व शास्त्रपारीणौ ।

अंगराज देवेंद्राविव—भद्रमंद्रादिगज शिक्षोपयोगि पालकाप्यमृग चर्मीयादि गजशास्त्रप्रतीतौ ।

वराहमिहिराविव—भूगोळ खगोळ गणित सिद्धान्त

फलादेश प्रश्नशास्त्रादि विविधविषय परिष्कृत ज्योतिश्शास्त्र संपन्नौ ।

भवभूति कालिदासाविव–ध्वनिगुणालंकाररीति कमनीय काव्यनाटकादि सरस्वतीविलासानुमोदित सहृदयहृदयौ ।

अश्वत्थाम विभीषणाविव चिरंजीविनौ ।

मार्कण्डेयवत्–नित्यषोडशवर्षदेशीयौ ।

च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

६. इमौ दम्पती—

अनवरतकृताग्निहोत्र दर्शपूर्णमास ज्योतिष्टोम सोमयाग हविर्याग पाकयज्ञ महायज्ञ श्येनचयन द्रोणचयन कङ्कचयन गरुडचयन वाजप्रेय पौण्डरीक चातुर्मास्याद्यनेकाध्वरतर्पित सर्वसुपर्ववितीर्ण सर्वाभीष्टौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु। तथास्तु

७. इमौ दम्पती—

गीर्वाण घूर्जर भारतीय महाराष्ट्र कर्णाटक त्रैलिंग द्राविड केरळोत्कल वंग पारसीक हूणादि पूर्वपाश्चिम द्वीपान्तरीयानेक भाषाप्रावीण्य सर्वदेश लिपिज्ञान संपन्नौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु

तथास्तु

८. इमौ दम्पती—

साङ्गवेदशास्त्र वेदान्तशास्त्र मीमांसाशास्त्र न्यायशास्त्र वैशेषिकशास्त्र आगमशास्त्र मन्त्रशास्त्र तन्त्रशास्त्र रसायनशास्त्र वनस्पतिशास्त्र कृषिशास्त्र पाकशास्त्र वाणिज्यशास्त्र नौकाशास्त्र मल्लशास्त्र मालिनीशास्त्र रत्नशास्त्र शिल्पशास्त्र चित्रशास्त्र रसशास्त्र अलंकार-शास्त्र साहित्यशास्त्र कामशास्त्राद्यनेकशास्त्रविचक्षणौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

९. इमौ दम्पती—

अतीतानागतज्ञान सर्वभूतरुतज्ञान पूर्वजन्मजातिज्ञान परचित्तमर्मज्ञान सूक्ष्मविप्रकृष्टज्ञान सर्वताराागण-ज्ञान ध्रुवचक्रगतिज्ञान कायव्यूहज्ञान चतुर्दशभुवन-ज्ञानाद्युत्तमानितर साधारण दिव्ययोगविभूतिमन्तौ च भूयास्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

१०. इमौ दम्पती—

मणिसिद्धि मन्त्रसिद्धि मृत्सिद्धि अंजनसिद्ध्यौषधसिद्धि पादुकासिद्धि गुटिकासिद्धि वाक्स्तंभ वयस्तंभ (खड्गस्तंभ) जलस्तंभाग्निस्तंभ वायुस्तंभ इन्द्रजाल महेन्द्रजालाद्यनेक कलासिद्धिपरिपूर्णौ च भूया-स्तामिति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

११. इमौ दम्पंती—

कोटीरमुखानुपमनवतुला
कोटीपर्यन्ताभरणावलि
राटीकत इहपरितस्सदने
त्रोटीधृतबिसहंसीचित्रित
शाटीसुंदरकंचुळिकांचित
चेटीकरधृतपरिमळमेदुर
पाटीररसस्फुरदत्यद्भुत
वीटीसविनयमुत्तमरूपव
धूटीनामुपचरतिसमीपे
नाटीकचिदिहविलसातिनवपरि
पाटीकचिदपिनिस्तुलकविकुल
कोटीरचयतुनवचटुकविता
पेटीकचनवैदिकाविद्व
द्धाटीधीरंप्रसंजितेक्षण
पोटीकृतपरिपंथिमुधपटु
घोटीरयचयनिपुणवचोभर
धाटीमस्याःश्रुत्वासतुवा
चाटीभवतियथाजातोपि

नित्यमेवमास्तां गृहमिदमत्युदारमास्तां पुनरपि कुन्दद्युति रदमंदस्मितशरदिंदुस्फुरदरविंदप्रतिभटवदनाः शुभ-

गुणसदना लक्ष्मीनिलया प्रकटितस्फुटविनया धूता-
पनयाःतनयाः स्युर्बहुजनयाचितदाः प्रभवतुमान्यं
बहुशोधान्यं स्फुरतु संपदतुलाकीर्ति स्फुरतु दीर्घमायुः
शुभमिति श्रीमतां धीमतां बहुविदां ब्रह्मविदां
निरंतर निगमाभ्यास परिपूत वदनारविंद निरर्गळ
निर्गळत्पुंखानुपुंख विजृंभित विजयाशीर्वचन घोष
परिभूषितौ च भूयास्तामिति भवन्तो महान्तो
नुगृह्णन्तु । तथास्तु

---

## ॥ तृतीयभागः ॥

---

अनयोर्दम्पत्यो रन्योन्यं प्रीतिरविच्छिन्नास्त्विति भवन्तो महान्तोऽनुगृह्णन्तु । तथास्तु

अनयोर्दम्पत्योः गृहस्थाश्रमधर्म कर्मनिष्ठागरिष्ठास्त्विति भवन्तो महान्तोऽनुगृह्णन्तु । „

अनयोर्दम्पत्यो रायुष्मत्सुगुणानेकनीरोग दृढगात्र सत्संतानाभिवृद्धि र्भूयादिति भवन्तो महान्तो नुगृह्णन्तु । „

अस्मिन् गृहे मासिमासि शुभत्रयं भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । „

अस्मिन् गृहे श्रीमहालक्ष्मीर्नित्यनिवासिनी भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । „

अस्मिन् गृहे नित्योत्सवो नित्यश्री र्नित्यमंगळं वर्धमानं भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु । „

आचंद्रार्कं वंशाभिवृद्धिरस्तु । „

राजा धार्मिको विजयीभवतु । „

देशोयं निरुपद्रवोस्तु । „

न्यायवादिपीडाराहित्यंभवतु । „

सर्वेजनास्सुखिनोभवन्तु । „

समस्तसन्मंगलानिसंतु । तथास्तु
सत्याएता आशिषस्सन्तु । ,,
स्वस्त्यस्तुतेकुशलमस्तुचिरायुरस्तु । ,,
गोवाजि हस्ति धनधान्य समृद्धिरस्तु । ,,
ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोस्तु । ,,
वंशेसदैवभवतां हरिभक्तिरस्तु । ,,

पति मंगळहारतिः ।

जयदेवजयदेव जयसुखकरमूर्ते
ममपते हरिशिवभास्करसममंगळमूर्ते
जयदेवजयदेव

आनंददायक ममसुखकारक ममपोषकमूर्ते
मंगलदायक पालकबहुसुखकरमूर्ते
नेत्रानंदविवर्धक गोविंदप्रियमूर्ते
करुणासागर नायक संरक्षकमूर्ते
जयदेवजयदेव जयसुखकरमूर्ते
जयशुभकरमूर्ते
ममपते हरिशिवभास्कर सममंगलमूर्ते
जयदेवजयदेव

फालसुचंदनकुंकुम कमलाकृतिनेत्र
रत्नतिलकमणिशोभित भागीरथिपुत्र

मरकतमणियुतकुण्डल धृतसुममणिमाला
घुमघुमपरिमळवासित सुन्दरवरशीला
जयदेव जयदेव जयसुन्दरमूर्ते जयमङ्गळमूर्ते
ममपते हरिशिवभास्कर सममंगळमूर्ते
जयदेव जयदेव

वीणावेणुमृदंगतालघट जलतरंगसुकला
सरिगमपधनिसमधुस्वर गानकलाकुशला
ताण्डवलास्यभरतशास्त्रयुत नृत्यकलाविमला
धीं धीं तननतािकिटतक ललितनटनविपुला
जयदेव जयदेव जयमोहनमूर्ते जयमङ्गळमूर्ते
ममपते हरिशिवभास्कर सममंगळमूर्ते
जयदेव जयदेव

अच्युतभक्तिकुतूहल वेदघोषश्रवणा
पूजाफलसंपादित नारायणशरणा
श्रेष्ठजनैरभिवन्दित मममुख्याभरणा
निजगुरुवरतिलकामम प्राणनाथरमणा
जयदेव जयदेव जयगुरुवरमूर्ते जयमङ्गळमूर्ते
ममपते हरिशिवभास्कर सममंगळमूर्ते
जयदेव जयदेव

सर्वशास्त्रसंमानित स्त्रीधर्माचरणे
पातिव्रत्यविवर्धन सद्बोधकनिपुणा
नारीस्वर्गोद्घाटित कृतमहिळाकरुणा
पतिपूजाविधिस्थापित पुष्पार्चितचरणा
जयदेव जयदेव जयशुभकरमूर्ते जयमङ्गळमूर्ते
ममपते हरिशिवभास्कर सममंगळमूर्ते
जयदेव जयदेव

ततः सुवासिन्यः हरिद्राकुंकुमोदकेन नीराजयेयुः ।

नारिकेळभ्रामणम्

सुभद्रापञ्चकपठनम्

ब्राह्मणानां तांबूलदानं सुवासिनीपूजा च ।

इति पतिपूजाविधानं सम्पूर्णम् ।

## APPENDIX

### OF

## GEMS AND JEWELS

NAMES OF FORTY TWO PRECIOUS STONES OF PRECIOUS INDIA.

1. माणिक्यं - The sun stone.
2. मौक्तिकं - The pearl or the Moon gem.
3. प्रवालं - The Coral or the Mars gem.
4. मरकतं - The Emerald or the Mercury stone.
5. पुष्यरागं - The Topaz or the Peridot, the Jupiter stone.
6. वज्रं - The Diamond or the Venus stone.
7. नीलं - The Saphire or the Saturn stone.
8. गोमेदं - The *Onyx or the stone of the Ascending node.
9. वैडूर्यं - The Cat's eye or Lazuli. The stone of the Decending Node.
10. कर्केतनं - A kind of precious stone.
11. कुलिशं - A kind of Diamond.
12. विमलकं - A kind of precious stone.
13. पुलकः - An Opal.
14. वैक्रान्तं - A kind of Diamond.
15. पेरजं or पेरोजा - A Turquoise (A sky Blue stone).
16. सूर्यकान्त - Jasper or the Fire stone.
17. चन्द्रकान्त - The moon stone.
18. अन्दुकान्त - A kind of cooling stone.

---

* Sardonyx is another variety of gomedhaka with white colour inside.

19. स्फटिकं - A white crystal.
20. राजावर्त - A kind of stone with gold sparks.
21. विराटजं - A kind of Diamond found in Virata country.
22. राजपट्टं - A sort of gem, sometimes used for विराटजं also.
23. राजमयं - A kind of precious stone.
24. राजमणि - Do
25. ब्रह्ममणि - A kind of (superior) precious stone.
26. ज्योतिरस Do
27. सौगन्धिकं - A kind of smokish ruby or a violet coloured [stone.
28. गन्धशस्कम् - A kind of precious stone.
29. रुधिराक्षम् Do
30. भुजंगमाणम् Do
31. कुरुविन्दम् - A kind of Ruby.
32. भ्रामरं - A kind of precious stone.
33. मरीष्मणि - An Amethyst (A jambul coloured violet [stone)
34. गिरिवज्रम् - A kind of Diamond.

EIGHT EXTRORDINARY RARE PEARLS

35. गजमुक्ता
36. इक्षुमुक्ता
37. मेघमौक्तिकम्
38. वराहमौक्तिकम्
39. शङ्खमुक्ता
40. मत्स्यमौक्तिकम्
41. सर्पमुक्ता
42. वेणुमुक्ता

# चतुर्दशरत्ननामानि

## १. माणिक्यनामानि ॥

१. **माणिक्यं**—शोणरत्नं, शृङ्गारी, रत्ननामकम्, रत्नं, लोहितकम्, रत्नराट्, रङ्गमाणिक्यं, रागयुक्, *कुरुविन्दं, रविरत्नकम्, तरुणं, पद्मरागः ॥

२. **लक्षणं**—स्निग्धं गुरुगात्रयुतं दीप्तं, स्वच्छं समाङ्गश्च सुरङ्गतञ्च ।
इति जात्यमाणिक्यं कल्याणं धारणात्कुरुते ॥

## २. मौक्तिकनामानि ॥

१. **मौक्तिकं**—मुक्ता, मौक्तिकेयम्, शौक्तिकेयम्, तारा, तारं, भौतिकं, तौतिकं, अम्भःसारम्, शीतलं, नीरजम्, नक्षत्रं, इन्दुरत्नं, लक्ष्मीः, मुक्ताफलं, बिन्दुरत्नं, मुक्तिका, शैलेयकम्, शशिप्रभम्, स्वच्छम्, हिमं, हिमबलं, सुधांशुभम्, सुधांशुकम्, मौक्तिकं, पद्मकं, कुमुदं, विमलोपरसम्, सुधांशुरत्नम् ॥

२. मोक्तिकं शौक्तिकं मुक्ता तथा मुक्ताफलञ्च तत् ।
अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत् ॥

३. मुक्ताफलं शौक्तिकेयं गङ्गेष्टिः कटशर्करा ॥ (वैजयन्ती) भा. प्रकाशे

४. मुक्ताफलाय हरिणं करिणं पलाय
सिंहं निहन्ति भुजविक्रमसूचनाय ॥

५. हारं सुवर्णं सुमृतञ्चतारम् । (चिन्तामणिः)

---

* The word "कुरुविन्दं" generally used for a particular kind of stone, the powder of which is used in cutting rubies, of different kinds such as coboshans or Cob-rubies Cut Rubies etc.

६. क्षीतुल्यदेशे तारस्तु मुक्ता शुद्धौ सुमौक्तिके ॥

७. मौक्तिकञ्च मधुरं सुशीतलं दृष्टिरोगशमनं विषापहम् ।
राजयक्ष्मपरिकोपनाशनं क्षीणवीर्यबलपुष्टिवर्धनम् ॥

A FINE HEART AND BRAIN TONIC

८. नक्षत्राभं शुद्धमत्यन्तमुक्तं स्निग्धं स्थूलं निर्मलं निर्व्रणञ्च ।
न्यस्तं धत्ते गौरवं यत्कलायां तन्निर्मौल्यं मौक्तिकं सौख्यदायि ॥

## विरळमहामुक्ताफलानि ॥

९. करीक्षुजीमूतवराहशङ्ख मत्स्याहि शुक्त्युद्भववेणुजानिः ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥

१०. नागदन्त भवश्चाभ्रिया कुम्भसूखरमत्स्यजाः ।
वेणुनागभवाः श्रेष्ठाः मौक्तिजं मेघजं परम् ॥

११. शङ्खो गजश्च क्रोडश्च फणीमत्स्यश्च दर्दुरः ।
वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥

## ३. प्रवालनामानि ॥

१. **प्रवालः**—विद्रुमः, अङ्गारकमणिः, भीमरत्नम् ॥

२. विद्रुमो ना प्रवालोऽस्त्री वज्रोऽस्त्री हीरकः पुमान् ॥ (वैजयन्ती)

३. लक्षणं—शुद्धं दृढं घनं वृत्तं स्निग्धं गात्रं सुरंगतम् ।
समं गुरु सिराहीनं प्रवालं धारयेत् शुभम् ॥

४. प्रसन्न कमलं स्निग्धं सुरागं विद्रुमं हि तत् ।
धनधान्यकरं लोके विष्णाति भयनाशनम् ॥

५. श्वेतसागरमध्ये तु जायते वल्लरी तु या ।
विद्रुमा नाम रत्नाख्या दुर्लभावज्र रूपिणी ॥

६. पाषाणं प्रभजित्येषा प्रयत्नात् कथितासती ।
विद्रुमं नाम यद्रत्नमामनन्ति मनीषकः ॥

## ४. मरकतनामानि ॥

१. **गारुत्मतं**—मरकतं, रौहिणेयम्, बुधरत्नं, वापबोलं, अश्मगर्भं, राजनीलं, सौपर्णं, अश्मगर्भजम्, गारुडम्, हरिन्मणिः, गरुडाङ्कितम्, गरुडोद्गीर्णम्, गरलारिः ॥

२. तस्योल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा ॥ (माघे)

## ५. पुष्परागनामानि ॥

१. **पुष्परागः**—मञ्जुमणिः, वाचस्पतिवल्लभः, पीतः, पीतस्फटिकः, पीतरक्तः, पीताश्म, गुरुरत्नं, पीतमणिः, पुष्पराजः ॥

२. तस्य प्रभानिर्जितपुष्परागं पौष्यन्ति भौ पुष्पमसूत पत्नी ॥ रघुवंशे

३. मृच्छायपीतगुरुगात्रसुरङ्गशुद्धं
स्निग्धञ्च निर्मलमतीव सुवृत्तशीतम् ।
यः पुष्परागशकलं कलयेदमुष्य
पुष्णाति कीर्ति मति शौर्य सुखायुरर्थान् ॥

४. ईषत्पीताच्छविच्छायास्वच्छं कान्त्या मनोहरम् ।
पुष्परागमिति प्रोक्तं रत्नसोममहीभुजा ॥

५. अस्य धारणप्रयोजनम्—
शणपुष्पसमः कान्त्या स्वच्छभा वस्तु चिक्कणः ।
पुत्रदो धनदः पुण्यः पुष्पराग मणिर्धृतः ॥

## ६. हीरकनामानि ॥

१. **वज्रं**—हीरं, भिदुरं, कुलिशं, पविः, अभेद्यम्, अशिरम्, रत्नम्, दृढम्, भार्गवकम्, षट्कोणम्, बहुधारम्, शतकोटिः, वज्रकम्, रत्नमुख्यम्, सूचीमुखम्, दधीच्यस्थि, वरारकम् ॥

२. हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः ।
स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियः स्मृतः ।
पीतो वैश्योऽसितः शूद्रः चतुर्वर्णात्मकश्च सः ॥

३. श्रीहर्षं कविराजराजिमुकुटालङ्कार हीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ॥

४. स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्यं लघु लेखनम् ।
षडारं तीक्ष्णधारञ्च सुशाम्यारं श्रियं दिशेत् ॥

## ७. नीलनामानि ॥

१. **नीलम्**—सौरिरत्नम्, नीलाश्मा, सुनीलकः नीलोत्पलः ।

२. इन्द्रनीलं महानीलं (वैडूर्यं बालवायजम् ।) (वैजयन्ती)

३. क्षीरमध्ये क्षिपेत् नीरं क्षीरञ्चेत् नीलतां व्रजेत् ।
इन्द्रनीलमिति ख्यातं तदा हि रत्नकोविदैः ॥

## ८. गोमेदकनामानि ॥

१. **गोमेदः**— गोमेदकं, राहुरत्नम्, तमोमणिः, स्वर्भानवः, पिङ्ग-स्फटिकः ॥

२. गौर्जलमिव मेदयति स्नेहयतीति गोमेदः ॥

## ९. वैदूर्यनामानि ॥

१. **वैदूर्यः**—बालवायजं, केतुरत्नं, कैतवं, प्रावृष्यम्, अभ्ररोहम्, खराब्दाङ्कुरकम्, विदूररत्नं, विदूरजम् ॥

२. एकं वेणुपलाश कोमलरुचा मायूर कण्ठत्विषा
मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा छायया ।
यद्गात्रं गुरुतां दधाति नितरां स्निग्धन्तु दोषोषितं
वैडूर्यं विशदं वदन्ति सुधियः स्वच्छञ्च तच्छोभनम् ॥

१०. **कर्केतनम्**—रत्नविशेषः ॥

वायुर्नखान् दैत्यपतेर्गृहीत्वा चिक्षेप सम्पद्य वनेषु हृष्टः ।
ततः प्रसूतं पवनोपपन्नं कर्केतनं पूज्यतमं पृथिव्याम् ॥

११. **वैक्रान्तं**—मणि विशेषः । पर्यायगुणौ—

वैक्रान्तञ्चैव विक्रान्तं नीजवज्र कुवज्रकम् ।
गोनासः क्षुद्रकुलिशं जीर्णवज्रञ्च गोनसः ॥
वैक्रान्तं वज्रसादृस्यं वज्रवद्रसवीर्यकम् ।
तथाप्यभावे वज्रस्य ग्राह्यं वैक्रान्तमुत्तमम् ॥
वज्राकारतयैव प्रसह्य हरणाय सर्वरोगाणाम् ।
यद्विक्रान्तं भत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥ राजनिघण्टुः॥

१२. **विमलकं**—माणिक्यं पौष्यकं शङ्खः पुलको विमलादयः ॥ (वैजयन्ती)

१३. **कुलिशं**—स्फीतां कीर्तिमनुत्तमां प्रियमिदं दत्ते यथा संधृतम् ।
मर्त्यानामयथायथं तु कुलिशं पत्यं हितं जात्यतः ॥

१४. **पुलकं**—मणिविशेषः ।

### कनकनामानि or सुवर्णनामानि ॥

स्वर्णं सुवर्णं कनकं, हिरण्यं हेम हाटकम् ।
तपनीयं कलधौतं, गाङ्गेयं घर्म काञ्चनम् ।
चामीकरं शातकुम्भं, तथा कार्तस्वरञ्च तत् ।
जाम्बूनदं जातरूपं, महारजतमित्यपि ॥

**मणिविषयः**—

वज्रेन्द्रनील कर्केतनपद्मरागरुधिराख्याः ।
वैडूर्य पुलकविमलकराजमणिस्फटिकशशिकान्तः ।
सौगन्धिकगोमेदकशङ्खमहानीलपुष्परागाख्याः ॥
मुक्ताविद्रुमवज्रेन्द्र वैडूर्यस्फटिकादिकम् ।
मणिरत्नं सरं शीतं कषायं स्वादुलेखनम् ।
चक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम् ॥
मणिर्लुठति पादेषु काचः शिरसि धार्यते ।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ॥

---

## Special abreviations used in the Table of European names of gems given here

| | | |
|---|---|---|
| a. | .... | apple colour. |
| b. | .... | baded with various colours. |
| bl. | .... | blue. |
| blk. | .... | black. |
| br. | .... | brown. |
| c. | .... | colourless. |
| ch. | .... | chrome. |
| chat. | .... | chatayant. |
| cim. | .... | cinnamon. |
| cl. | .... | clove. |
| den. | .... | dendritic. |
| em. | .... | emerald. |
| g. | .... | green |
| gr. | .... | grass. |
| ir. | .... | iridescent. |
| lf. | .... | leaf. |
| lk. | .... | leek. |
| lt. | .... | light. |
| o. | .... | olive. |
| op. | .... | opalescent. |
| p. | .... | purple. |
| r. | .... | red. |
| ru. | .... | ruby. |
| s. | .... | smoky. |
| v. | .... | viloet. |
| vc. | .... | vari - coloured. |
| w. | .... | white. |
| y. | .... | yellow. |

## EUROPEAN NAMES OF PRECIOUS STONES AND SIGNATE STONES

| NO. | POPULAR NAME. | | COLOUR. |
|---|---|---|---|
| 1. | Achroite. | .... | c. |
| 2. | Agate. | .... | b. |
| 3. | Alabaster (common) | .... | w. |
| 4. | Alabaster (oriental) | .... | b. |
| 5. | Alexandrite. | .... | g. |
| 6. | Almandite. | .... | v. |
| 7. | Amazonstone. | .... | g. |
| 8. | Amber. | .... | y. |
| 9. | Amethyst (common) | .... | p. |
| 10. | Amethyst (oriental) | .... | p. |
| 11. | Aquamarine. | .... | v. c. |
| 12. | Aventurin (sunstone) | .... | r. br. |
| 13. | Axinite. | .... | cl. br. |
| 14. | Azurite. | .... | bl. |
| 15. | Azurlite. | ... | bl; bl, gr. |
| 16. | Azurmalachite. | ... | bl. gr. |
| 17. | Balasruby. | ... | ru. r. |
| 18. | Benitoite. | ... | bl. |
| 19. | Beryl. | .... | v. c. |
| 20. | Bloodstone. | .... | g. r. |
| 21. | Bowenite. | .... | y-gr. gr. |
| 22. | Burmite. | .... | y. br. |
| 23. | Cairngorm. | .... | s. br. |
| 24. | Californite. | .... | gr. |
| 25. | Carbuncle. | .... | r. |
| 26. | Carnelian. | .... | r. to y. |
| 27. | Cat's eye. (oriental) | .... | y. br. g. |

| NO. | POPULAR NAME. | | COLOUR. |
|---|---|---|---|
| 28. | Cat's eye. (quartz.) | .... | y. g. |
| 29. | Ceragate. | .... | ch. y. |
| 30. | Chalcedony. | .... | v. c. b. |
| 31. | Chalcedony. | .... | v. c. b. |
| 32. | Chloropal. | .... | a. g. |
| 33. | Chrysober. | .... | g. to y. |
| 34. | Chrysolite. | .... | o. g. |
| 35. | Chrysoparse. | .... | a. g. |
| 36. | Cinnamonstone. | .... | cin. y. |
| 37. | Citrine. | .... | lt. y. |
| 38. | Crocidolite. | .... | bl. br. |
| 39. | Cymothane. | .... | chat. |
| 40. | Demantold. | .... | em. g. |
| 41. | Diamond. | .... | v. c. |
| 42. | Dichroite. | .... | bl. |
| 43. | Egyiptianjasper. | .... | v. c. |
| 44. | Emerald. | .... | gr. g. |
| 45. | Enstatite. | .... | y. to g. |
| 46. | Essonite. | .... | cin. y. |
| 47. | Euclase. | .... | v. c. |
| 48. | Girasol. | .... | o. p. |
| 49. | Hematite. | .... | black. |
| 50. | Hiddenite. | .... | em. g. |
| 51. | Hyacintha. (precious) | .... | r. |
| 52. | Hyperstheni. | .... | br. |
| 53. | Indicolight. | .... | bl. |
| 54. | Iolite. | .... | bl |
| 55. | Jacinth. | .... | r. |
| 56. | Jade. | .... | g. |
| 57. | Jedeite. | .... | em. g. |
| 58. | Jasper. | .... | v. c. |

| NO. | POPULAR NAME. | | COLOUR. |
|---|---|---|---|
| 59. | Jet. | .... | blk. |
| 60. | Kunzite. | .... | lilac. |
| 61. | Labrodorite. | .... | chat. |
| 62. | Lapislazuli. | .... | bl. |
| 63. | Macle. | .... | gray. |
| 64. | Malachite. | .... | G. b. |
| 65. | Marcasite. | .... | y. |
| 66. | Melanite. | .... | blk. |
| 67. | Mexican Onyx. | .... | b. |
| 68. | Mochastone. | .... | w. b. |
| 69. | Moissanite. | .... | D.P.B.L. |
| 70. | Moldaite. | .... | dk. g. |
| 71. | Moonstonc. | .... | chat. |
| 72. | Morganite. | .... | rose. |
| 73. | Mossagate. | .... | den. |
| 74. | Nephrite. | .... | g. |
| 75. | Obsivian. | .... | blk. |
| 76. | Olivin. | .... | o. g. |
| 77. | Onegite. | .... | blk. in w. |
| 78. | Onyx. | .... | b. |
| 79. | Opal. | .... | c. |
| 80. | Opaline. | .... | ir. |
| 81. | Peridot. | .... | o. g. |
| 82. | Perthite. | .... | r. b. |
| 83. | Phenacite. | .... | w. |
| 84. | Planma. | .... | lf. g. |
| 85. | Prase. | .... | lk. g. |
| 86. | Pyrite. | .... | y. |
| 87. | Pyrope. | .... | r. |
| 88. | Rhodochrosite. | .... | r. |
| 89. | Rhodolite. | .... | r. p. |

| NO. | POPULAR NAME. | | COLOUR. |
|---|---|---|---|
| 90. | Rhodonite. | .... | pink. |
| 91. | Ribonjasper. | .... | b. |
| 92. | Rockcrystal. | .... | c. |
| 93. | Rosaline. | .... | r. |
| 94. | Roselight. | .... | pink. |
| 95. | Roseopal. | .... | pink. |
| 96. | Rubellight. | .... | r. |
| 97. | Ruby. | .... | r. |
| 98. | Rubyspinel. | .... | r. |
| 99. | Rumanite. | .... | br. |
| 100. | Sagenite. | .... | w. |
| 101. | Sagenitiquarz. | .... | c. |
| 102. | Saphire. | .... | bl. |
| 103. | Saphirespinel. | .... | bl. |
| 104. | Sard. | .... | r. |
| 105. | Sodalite. | .... | bl. |
| 106. | Spessartite. | .... | y. |
| 107. | Spinal. | .... | v. c. |
| 108. | Spodumene. | .... | y. g. |
| 109. | Sunstone. | .... | chat. |
| 110. | Sunstone. | .... | r. br. |
| 111. | Tiffanite. | .... | bl. w. |
| 112. | Tiger's eye. | .... | br. |
| 113. | Topaz. | .... | v. c. |
| 114. | Tuquoise. | .... | bl. |
| 115. | Utalite. | .... | y. gr. |
| 116. | Zircan. | .... | v. c. |

# SANSKRIT NAMES FOR ORIENTAL JEWELS AND ORNAMENTS

1. **ललन्तिका** - A necklace coming down up to the navel.

   नाभिलम्बकण्ठिकादिः ॥

2. **लवाङ्किका** - A clove like ear ornament.
3. **ललाटिका** - A tilak set with precious stones worn on the forehead.

   स्वर्णरत्नादिरचित ललाटाभरणम् ॥

4. **वालिका** - A Gemset finger ring worn on the upper flat of the ear.
5. **लम्बिका** - A long hanging ornament.
6. **ललामिका** - A small chaplet worn on the forehead

   पुरोन्यस्तमाल्यं.

   A Teeka in Hindi and Gujarati.

7. **ललाटपट्टहासिका** - An ornament worn on the forehead used with a coloured silk.
8. **लंबनं** - A long necklace.

   (ग्रैवेयकं कंठभूषा लंबनं तु ललम्बिका ।)

9. **लम्बुषा** - A necklace of seven strings.
10. **लतामणिः** - Coral . A gem derived from a creeper and hence is called **लतामणि**.
11. **प्रालंबिका** - A Golden necklace. **सुवर्णहारः**.

    स्वर्णैः प्रालंबिकातोर सूनिका मौक्तिकैः कृताः ।

12. **लोहितं** - Ruby.
13. **पादलंबिमालिका** - An extra long garland worn up to the feet.

14. कर्णिका - A ear ring of a floral design of the fashion of कर्णिकार - flower set with gem or otherwise.

15. कण्ठिका - A neck ornament कण्ठाभरण.

16. पञ्चरत्नमालिकाम् - A Garland set with five kinds of precious stones comprising of pearls, rubies, saphires, emerald, and tepazes, or coral beads.

17. वज्ररत्नमङ्गदं स मौक्तिकस्य जालिकां - An ornament set with diamonds and other precious stones worn on the arm along with a pearl band with net work attached to it.

धूयमानैश्च वासोभिः श्लक्ष्णैरङ्गदभूषणैः ॥ रामायणे ॥

अङ्गदं = केयूरं—

पादानां भूषणानाञ्च केयूराणाञ्च सर्वशः ।

रासयश्चात्र दृश्यन्ते भीष्म भीम समागते ॥ महाभारते ॥

18. मकरकण्ठमालिकाम् - A necklace having a particular kind of pendant and known as Makarakanti attached to the garland of ihe rare long shaped pearls obtained from the head's of elephant known as Gajamuktha.

19. रत्नम् - A jewel.

20. ऊर्मिकां - Rings set with precious stones उत्कण्ठा, भृङ्गनादः, अंगुलीयकम्.

21. हीरकादिपालिकां - An ornament set with diomonds worn on the outer part of the ear

22. 'कुण्डलं - Papular ear rings of different types worn by Gods, high class Brahmins. Somayagins and other Hiudus. पाशः, विलयः. ॥

23. सूर्यचन्द्रमण्डलं - A set of ornaments set with precious stones and pearls, worn on the head and forehead representing sun and moon together with the head ornaments known as भिंदिटीका.

24. मखला - Belt. सारसनं । कक्षा ॥

25. लोलकं - A pearl or other drop.

26. ललामकं - Chaplet falling over the head. (पुरोन्यस्तमाल्यं)

पुर. संमुखभागे न्यस्तं ललाटपर्यन्तमागतं माल्यं ललामकम् ॥

27. कलापकं - An ornamental facing of a waist band something of the design of peacock feather.

कलापो भूषणेकाञ्च्यां सङ्घाते बर्हतूणयोः ॥

28. शृङ्खला - A kind of waist chain उन्दूकः विगडः ॥

शय्यां जहत्युभय पक्षविनीत निद्राः

स्तंबेरमा मुखर शृङ्खल कर्षिणस्ते ॥

29. लंबहारः - A long hara.

30. चोलकं - A waist coat or bodice set with precious stones.

31. कोमलं - Soft.

32. कंकणं - A waist ornament करभूषणं । हस्तसूत्रं ॥

33. नूपुरं - A toda gingling with beads, A leg ornament.

नूपुरौ विमलौतद्वत् ग्रैवेयकमनुत्तमम् ।

गुणवानपिमौकर्यात् पादो लुठति नूपुरः ॥

34. हंसकं - A foot ornament.

35. किरीटकं सहीरकं - Crown set with diamond.

36. शेखरं - An aigrett or kalgi, sirpech set with diamonds.

37. तुरकं - A bunch of pearls, emeralds etc. beads worn on the head along with kalgi sirpeche, known as Thuras.

38. स्वस्तिकं - A sign or emblem which gives the happiness and prosperity; a qwadriple crest jewel.
39. पद्मकं - An ornamental lotus flower set with jems.
40. वालकं - A kind of finger ring or bracelet अङ्गुलीयकं.
41. तालकं - An ornament worn on the lower flat of the ear.
42. त्रिकोणवज्रलोलकं - A triangular diamond jewel worn on the upper flat of the ear.
43. कर्णवेष्टनं - A kind of round kundalam having emarald beads and pearls.
44. इंगिकां - A kind of ornament.
45. घटिकासु घंटायंत्रिकां - A watch containg the sweet sound of bell and alarm.
46. रत्नमत्स्य - A fancy fish box set with precious stones containing the frangrants जवादि.
47. अन्दुकां - Foot ornament.
48. मौक्तिकां - A small monogram.
49. पक्षिकं - Any fancy ornament of the shape of a bird set with precious stones.
50. नायकं - Jewel in the middle of a chain, generally a pendent हारमध्यस्थितं रत्नं तरलोनायकोपि च ॥
51. मुद्रिकां - A ring containing crest or manogram or the name engraved in it.

सौवर्णी रजती ताम्री आयसी वा सुशोभिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत् तत्र मुद्रिका ॥
मिताक्षरायां व्यवहार अध्याये ।

52. .................... राङ्करत्नहारकं - Necklaces of 9 gems comprising of diamonds, saphires, pearls, etc, beside those made of corals, Topazes, Rubies, Lazulis, cat's eyes, emeralds and Gomedikas

53. **माणवः** - Pearl garland consisting of 16 strings.
षोडशयष्टिहारः ।

54. **अर्धमाणवः** - Pearl garland consisting of 12 strings.
अर्धहारश्चतुष्षष्टिर्गुच्छमाणवमन्दराः ।
अर्धे रश्मिकलापोऽथ द्वादशस्त्वर्धमाणवः ॥

55. **अर्धहारः** - Pearl garland consisting of 64 strings.
चतुष्षष्टियष्टिहारः ।

56. **तारहारः** - A coronal containing 27 beads.

57. **मूर्धतार** - A star like ornament worn on the head.

58. **बन्धुरम्** - A diadem.

59. **चन्द्रकान्त - चन्द्रमणीहार** - A necklace of moon stone.

60. **चन्द्रहारः** - A kind of ornamental gold garland with a number of strings used by women known as **चन्द्रहार,**

61. **चाटुकार** - A golden ball chain.
गुडकैर्मणिसोपानं चाटुकारश्चहेमजैः ।

62. **चन्द्रिरम्** - A moon like jewel.

63. **गुत्सहारम्** - A necklace of 36 strings.

64. **हेमहारम्** - A golden necklace known as Atukulaharam

65. **मत्स्यमुक्तिमन्दरम्** - A mandara necklace containing rare type of pearls obtained from fish.

66. **हारफलम्** - A pearl necklace consisting of 5 strings.
द्विर्द्वादशोर्द्धे गुच्छोऽथ पंचहारः फलंलता । (वैजयन्ती)

**हारः** - String of pearls. Pearl necklaces. Pearl garland consisting of 108 strings.

हारो मुक्तावलीस्त्रीस्यात् तद्भेदायष्टिसंख्यया ।
देवच्छन्दश्शतं साष्टमिन्द्रच्छन्दसहस्रकं ।
तस्यार्धे विजयच्छन्दं हारस्त्वष्टोत्तरंशतम् ॥

67. **सुहीरमणी** etc. up to **तमोमणीहारकम्** - (see p. 51 slo. 8) Necklaces containing diamond beads, emerald beads, saphire beads, coral beads, Topaz beads, Cat's eye or lazuli beads and Gomedika beads.

68. नेत्रमणी - A term of addressing any of the dearest or the most loving person stating—Thou art my eye boys, which in Tamil is called கண்மணியே !
69. नागमणीहारकम् - The necklace consisting of the very rare and extraordinary highly precious stones, chiefly rubies obtained from the hood of the serpant which illuminates a large surface of the ground.
70. पारिहार्यम् - A wide flat bracelet of oblong shape worn by males which is called a pair of ponchees set with precious stones worn on the wrists.
71. पारितत्या - A jewel worn on the parting of the hair called Seemantha in Tamil நெற்றி.

सीमन्तिका = सीमन्तपट्टिका = सीमन्त भूषणम् ॥

(But will not suit to the present crooked Semantam or the parting of the hair on the sides of the head according to the fashion of the present day westernised girl. To such a parting of the hair, the ornament is of a different type without sun and moon.)

72. पारिजातम् - An ornament of the kind of celestial flower known as parijata which is mostly liked by Satyabhama, one of the wives of Vishnu.
73. पार्श्वकम् - An ornament worn on the sides.
74. पालियुगल - A pair of ear jewels worn on the upper flat of the ears.
75. पालपाश्या - A kind of ornament.
76. बालपाश्या - Ornaments worn on either sides of the hair.
77. पादकटक - A pair of leg bangles.
78. पादरत्नचूडकम् - A pair of leg ornaments.
79. पदाङ्गदं - Leg jewels,
80. पादुकां - A pair of sandals—A golden foot wear.
81. पादकाङ्गुलीयकं - Gold or silver rings worn on the toes or in leg fingers.

1. (नव) मणिमकुटं - A crown set with all the 9 main kinds of precious stones.
2. कटिलग्नं - An adjustable waist ornament.
3. कुटिलं - A crossly worn ornament.
4. कटिसूत्रं - A waist chain.
5. चित्रकं - A jewel worn on the forehead.
6. तरलं - A shining shaking ornament.
7. चन्द्रशकलं - A moon shaped jewel worn on the partings. of the hair.
8. तिलकं - A gemset mark put on the face.
9. चन्द्रकला - A jewel like the digit or the particle of the moon.
10. पादवलयं - A leg Thoda.
11. नासामणि - A nose gem.
12. पञ्चसरं - Any ornament of five strings worn in the wrist or shoulder or neck.
13 नवसरं - Any ornament of 9 strings.
14. माणिक्यं - An independant jewel of that name.
15. नीलकं - A kind of saphirelet ornament.
16. त्रिसरं - A three stringed ornament.
17. वर्णसरं - A jewel containing letters.
18. सप्तसरं - A seven stringed jewel.
19. बिंबसमाकारभूषणं · An image like ornament.
20. प्रसरं - A spreading ornament.
21. शिरोरत्नभूषणं - A head ornament.
22. कर्णावतंसं - A kind of round ear ring.
23. तुलाकोटी - A tinkling ornament of the feet.
24. कोटीरं - A variety of gemset crest.
25. वैकक्ष्यं - An ornament set with precious stones worn on the left shoulder falling towards the right side like a sacred thread.
26. कक्ष्या - An upper garment set with gems worn on loins

27. नखद्योतं - An ornament worn on the nails.
28. उत्क्षिप्तिका - An ornament of the upper ear.
29. क्षुद्रघण्टा - A jewel containing bells or tinkling ornament
30. शक्तिमुद्रा - A power generating ring.
31. द्विराजिकं - A pair of bangles set with pearls in double rows.
32. त्रिराजिकं - A pair of bangles with 3 rows of pearls set in the bangles called द्विराजिकं.
33. विराजितं - A pair of ear-rings set with pearls around.
34. त्रिहीरकं - A kind of pendant like jewel with 3 diamonds hanging.
35. रत्नगर्भकं - A kind of jewel containing cob-rubies.
36. हस्तचूडकं समौक्तिकं - A pair of flat gold bracelets called चूडा chuda used as an auspicious ornament on the occasion of marriage.
37. रत्नगुच्छं - A clustre of precious stones.
38. केतकीदलं - A gold jewel called Kevada worn on the head.
39. विवाहकौतुकं - A special jewel worn at the time of marriage as an auspicious sign.
40. वीरपादकङ्कणं - A leg ornament presented to a warrior in appreciation of heroism.
41. चित्र रत्नभूषणं - A peculiar arsistic gemset ornament.
42. हरिण्मणीमयूरकं - A peacock like jewel having emeralds and blue saphires set in.
43. हीरहंस भूषणं - A round head ornament with a figure of swan set with brilliants or flat diamonds known as चाक (chak) or ஜடபில்லை.
44. वज्रचन्द्रशेखरं - A crescent like diamond head ornament like an aigrette.
45. बाहुनागं - A gold jewel of the design of snake worn on the arms.

46. हस्तिमुष्टिदंडकं - A walking stick with an ornamental elephant faced handle.
47. सिंहवक्त्रकंकणं - A pair of bangles having the faces of the lion.
48. बाहुभूषं - A shoulderet.
49. बाहुवलयं - An armlet.
50. बाहुवेष्टनं - An ornament tied round on the arm.
51. नाभिपूर - A jewel worn on the abdomen.
52. नागभूष - A serpant like jewel worn on the centre of the head.
53. वेणिनागभूषणं - A serpant like jewel worn on the platted hair by women.
54. ब्रह्मसूत्र - A gold sacred thread also set with precious stones.
55. उरस्सूत्र - A necklace worn on the chest.
56. हस्तसूत्र - A jewel worn on the hands.
57. पत्रकं - A leaf shaped jewel.
58. चित्रपत्रपाख्या - An artistic ornament worn on the forehead.
59. तालपत्रं - A ear ornament like a Kammal.

---

## कालिकापुराण श्लोकाः ॥

किरीटं च शिरोरत्नं कुण्डलं च ललाटिका ।
तालपत्रं च हारश्च ग्रैवेयकमथोर्मिका ॥
प्रालम्बिका रत्न सूत्र मुत्तंगोऽथर्क्षमालिका ।
पार्श्वद्योतो नखद्योतो ह्यंगुळीच्छादकस्तथा ॥
कटिलग्नं माणवको मूर्धतारा ललन्तिका ।
अङ्गदो बाहुवल्य श्शिखाभूषण मिश्रिका ॥

प्रगण्डबन्धं तत्पाशं नाभिपूरोथमालिका ।
सप्तकी शृङ्खलं चैव दण्डपत्रं च वर्णकः ॥
उरस्सूत्रं च नीवी च मुष्टिबद्धं प्रकीर्णकम् ।
पादाङ्गदं हंसकं च नूपुरं क्षुद्र घण्टिका ॥
मुखपट्टमितिप्रोक्ता अलङ्कारास्सुशोभनाः ।
चत्वारिंशदमी प्रोक्ता लोके वेदे च सौख्यदाः ॥
अलङ्काराः प्रदानेन चतुर्वर्ग प्रदायकाः ॥

॥ मुक्ताहारधारणगुणाः ॥

मुक्तानां हार विधृतिः दाहपित्त विनाशिनी ।
कान्ति हर्षनेत्र सुखं ददातीति प्रकीर्तितम् ॥ (सालग्राम निघण्टु)

---

## भूषाभोगः ॥

एवं विधानि माल्यानि भूषणान्यथ भूपतिः ।
रत्नहेम मयान्यङ्गे विधृयात् सप्रभाणि च ॥ १
यंत्र संघट्टितानीव सुवृत्तान्युज्वलानि च ।
नवनीरद कांतानि मौक्तिकानि वराणि च ॥ २
शुक्तिगर्भ समुत्थानि कुंभिकुम्भोद्भवानि च ।
वंसरन्ध्र प्रसूतानि मेघधारा भवानि च ॥ ३
सिंहलद्वीप जातानि रत्नाकर भवानि च ।
दाडिमी बीजकांतानि शक्रगोपनिभानि च ॥ ४
रक्तपद्म सरागानि बालसूर्य प्रभाणि च ।
माणिक्यान्यपि रम्याणि स्थूलानि विविधानि च ॥ ५
अतसीपुष्पसंकाशं हरिकान्तसमप्रभम् ।
हरकण्ठसमच्छायं इन्द्रनीलं प्रभान्वितम् ॥ ६

लाहणादि समुद्भूतं तृणग्राहि मनोहरम् ।
मसृणं चाति शोभाढ्यं इन्द्रनीलं सपीवरम् ॥ ७

इन्द्रायुधांतगर्भेण हरितेन समप्रभम् ।
कीरपक्षसदृक्षाभं गरुडोद्गारसम्भवम् ॥ ८

श्लक्ष्णं मरकतं कान्तं नलिनाभं दलोपमम् ।
विषघ्नं दुर्लभंरत्नं बहुमूल्यं मनोहरं ॥ ९

सितं ब्राह्मण जातीयं रक्तं क्षत्रिय जातिकम् ।
वैश्यजातीयकं पीतं कृष्णं वृषलजातिकं ॥ १०

षट्कोणशुद्धं तीक्ष्णं च फलकेषु समंलघु ।
वैराकरभवं वज्रं विप्रजातीय मुत्तमम् ॥ ११

एतानि रत्नमुख्यानि कथितानीह लक्ष्मतः ।
गोमूत्रवर्ण निर्णीतं रत्नं गोमेधिकं भवेत् ॥ १२

ईषत्कृष्णं सिताभं च वैडूर्यक मुदाहृतम् ।
ईषत्पीतं च वज्राभं पुष्यरागं प्रचक्षते ॥ १३

पक्वबिंबसमाभासं शुकतुण्डसमप्रभम् ।
काकतुण्डीसमच्छायं प्रवालमभिधीयते ॥ १४

तपस्याजपसंस्पर्शात् उद्गिरत्यनलंहियः ।
सूर्यकान्तं विजानीयात् स्फाटिकं रत्नमुत्तमं ॥ १५

अमृतांशुकरस्पर्शात् शंस्रवत्यमृतोदकं ।
दुर्लभं तन्महारत्नं चन्द्रकान्तं विदुर्बुधाः ॥ १६

श्वेताभ्रक समंवर्णं हिमाद्रिशिखरोद्भवम् ।
निर्मलं च प्रभायुक्तं स्फटिकं परिकीर्तितम् ॥ १७

सर्वेषामेव रत्नानां लक्षणं समुदाहृतम् ।
निजवर्ण समुत्कर्षात् कांतिमत्त्वात् महार्घता ॥ १८

स्थूलमुक्ताफलैः कार्याकण्टेत्वेकावलीसरा ।
मध्यं मुक्ताफलैः कार्यैत्रिसरं सुविचक्षणैः ॥ १९

तथापञ्च सरंकुर्यात् नवसप्तसरं तथा ।
उपांतेनील माणिक्य मिश्रितं सुमनोहरम् ॥ २०

काचिनीभिः मृणालीभिः पक्तिस्ताभिः सुशोभितान् ।
क्रमशोहीयमानांश्च सरान् कुर्यात् मनोहरान् ॥ २१

गुच्छीकृत मृणालीभिः हारेसर्वान् समान् सरान् ।
नीलमाणिक्य सम्युक्तान् पूर्ववत् परिकल्पयेत् ॥ २२

नीलैर्युक्ता तथा मुक्ताफलैः मध्येत्रिभिर्युता ।
नीललम्बिनिका ख्याता हरिन्माणिक्यजा तथा ॥ २३

तथैवनील सम्युक्त मुक्तंपूर्व क्रमेण तु ।
कृतोवर्ण सरोनाम दर्शनीयो मनोहरः ॥ २४

एतएव सराहीनाः मृणालीभिः सुसंहताः ।
आनाभिलम्बिता भूषा ब्रह्मसूत्र मितीरिता ॥ २५

सुवर्णोपरिविन्यस्तरत्नराजीसमन्वितम् ।
हरिन्माणिक्य नीलेन बृंहिता नायकेन च ॥ २६

मध्यदेश निविष्टेन मणिना परिशोभितम् ।
पदकं रुचिरं रम्यं वक्षःस्थल विभूषणम् ॥ २७

नानारत्नविचित्रं च मध्यनायकसम्युतम् ।
सरकैर्लम्बितं रम्यं पदकं बन्धुरंविदुः ॥ २८

सिंहवक्त्र समाकारं नानारत्न विचित्रितम् ।
सूसुकैर्लम्बनैर्युक्तं केयूरं बाहुभूषणम् ॥ २९

सौवर्णमणि विन्यस्त मुक्ताजालकमङ्गदम् ।
पेचकापिच्छ संयुक्तं बाहुसंधिविभूषणम् ॥ ३०

सुवर्णोपरि विन्यस्त नानारत्न विराजितम् ।
हस्तस्यकटकं रम्यं स्वप्रभापरिशोभितम् ॥ ३१

मध्येवज्रसमायुक्तमष्टवज्रमुदीरितम् ।
वृत्ताकार निविष्टैश्च कुलिशैः परिवेष्टितम् ॥ ३२

मध्ये च मणिनायुक्तं मणिमण्डलमीरितम् ।
ऋज्वायतचतुष्कोणक्रमोन्नति निवेशिभिः ॥ ३३

वज्रैर्मध्यग माणिक्यैः नंद्यावर्ताङ्गुलीयकम् ।
माणिक्येन सुरङ्गेण मौक्तिकेन सुशोभिना ॥ ३४

प्रवालेनातिरम्येण तथा मरकतेन च ।
पुष्यरागेण वज्रेग नीलेन परिशोभिना ॥ ३५

गोमेधिकेन रत्नेन वैडूर्येण विनिर्मितम् ।
रत्नैर्नवग्रह स्थानैः नवभिः परिकल्पितम् ॥ ३६

नवग्रहमितिख्यातं अङ्गुलीयकमुत्तमं ।
अङ्गुलीवेष्टितं वज्रैः वेष्टितं वज्रवेष्टकम् ॥ ६७

अन्यरत्नैश्च यत्त्वेवं तत्तद्वेष्टकमुच्यते ।
हीरयोरुभयोर्मध्ये कीलितं हीरमुत्तमम् ॥ ३८

त्रिहीरकमितिख्यातं अङ्गुलीयक मुत्तमम् ।
यत्तुनाग फणाकारं बहुरत्न विभूषितम् ॥ ३९

